# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अजगरः - | Python | निलीय - | Having hidden himself |
| अन्तर्हितः - | Disappeared | निस्सारयति - | Throws out |
| आहतः - | Beaten | नोदनम् - | Press (V) |
| इच्छुकः - | One who wishes | पाषाणः - | Stone |
| उदरोपपीडम् - | Hearty (Laughter) | पिञ्जः - | Switch |
| उपसंहृत्य - | Having resumed his usual form | फूद्गः - | Balloon |
| औपचारिकम् - | Formal | मृत्तिका - | Mud |
| कनिष्ठः - | Younger | मेला - | Congregation |
| कारण्डवः - | Goose | मौग्ध्यम् - | Innocence |
| कीलयति - | Locks (V) | याचति - | Begs |
| क्षुल्लकः - | Flimsy | विच्छायम् - | Lustreless |
| चर्मव्याधिः - | Skin disease | वृश्चिकः - | Scorpion |
| चाकलेहः - | Chocolate | शिरस्त्रम् - | Cap |
| चिक्रोडः - | Squirrel | शैत्यम् - | Cold |
| ज्येष्ठः - | Elder | श्येनः - | Hawk |
| तात्कालिकः - | Temporary | सङ्केतः - | Address |
| तालः - | Lock | सान्द्रम् - | Dense |
| दष्ट्वा - | Having bitten | सूकरी - | Sow (Female pig) |
| देहली - | Threshold | सौलभ्यम् - | Fecility |
| द्योतयति - | Indicates | स्तब्धः - | Stunned |
| निगृहीतः - | Controlled | स्फोटकम् - | Cracker |
| निरीश्वरवादी - | A non-believer (in god) | हरिणशावकः - | Fawn |

**Statement about ownership of CHANDAMAMA (Sanskrit)**
**Rule 8 (Form VI), Newspapers (Central) Rules, 1956**

| | |
|---|---|
| *1. Place of Publication* | 'CHANDAMAMA BUILDINGS'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *2. Periodicity of Publication* | MONTHLY<br>Ist of each calender month |
| *3. Printer's Name* | B.V. REDDI |
| *Nationality* | INDIAN |
| *Address* | Prasad Process Private Limited<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *4. Publisher's Name* | B.VISWANATHA REDDI |
| *Nationality* | INDIAN |
| *Address* | Chandamama Publications<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *5. Editor's Name* | B.NAGI REDDI |
| *Nationality* | INDIAN |
| *Address* | 'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *6. Name and Address of individuals who own the paper* | CHANDAMAMA PUBLICATIONS<br>PARTNERS:<br>1. Sri B. VENKATRAMA REDDY<br>2. Sri B.V. NARESH REDDY<br>3. Sri B.V. SANJAY REDDY<br>4. Sri B.V. SHARATH REDDY<br>5. Smt. B. PADMAVATHI<br>6. Sri B.N. RAJESH REDDY<br>7. Smt. B. VASUNDHARA<br>8. Kum. B.L. ARCHANA<br>9. Kum. B.L. ARADHANA(Minor)<br>(Minor admitted to the benefits of Partnership)<br><br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |

I, B Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

*1st March 1993*

**B. VISWANATHA REDDI**
*Signature of the Publisher*




# चन्दमामा

संस्थापकः – 'चक्रपाणिः' सञ्चालकः – 'नागिरेड्डी'

## मानवीयमौल्यानां रक्षणं कर्तुम् एषः समयः

अस्माकं देशः सतीयात् अग्निकाण्डात् दग्धः सन् सद्यः एव स्वास्थ्यम् आपन्नः अस्ति। इदानीं यथा सतीर्यविद्वेषाग्निः उद्बुद्धः आसीत् तथैव इतः पञ्चचत्वारिंशद्वर्षेभ्यः पूर्वं देशविभजनकाले अपि आसीत्।

तत्काले घटितायाः घटनायाः कारणं तु राजकीयम् आसीत्। यस्य देशस्य राजकीयास्तित्वस्य एव पञ्चसहस्राधिकवर्षाणाम् इतिहासः अस्ति तस्य देशस्य कश्चन भागः तदा कर्तितः, पृथग्देशत्वेन निर्दिष्टः च। यद्यपि विभाजनं मताधारेण कृतं, तथापि तस्य पृष्ठभूमिका तु राजकीयदृष्टिप्रेरिता एव आसीत्। एवं देशस्य विभाजनं जातम् एव। गच्छता कालेन अनन्यगतिकतया जनैः एषा वस्तुस्थितिः अङ्गीकृता अपि।

तदा जनैः निरीक्षितं यत् इतः परं वा देशे सुखं शान्तिः च भवेत्, वयं भ्रातृभावेन मैत्रीभावेन च निवसेम इति। इतिहासतः जनैः ज्ञातम् आसीत् यत् भौगोलिकवैशाल्यकारणतः, जीवनविधानभेदकारणतः च यद्यपि भेदः दृश्यते, तथापि गुप्तगामिनी एकता सर्वेषु प्रवहति इति। एषा एकता भारतीयसंस्कृतेः वैशिष्ट्यम् अस्ति, या च संस्कृतिः सहस्राधिकवर्षेभ्यः पूर्वं विकसिता सती इदानीम् अपि प्रवहन्ती अस्ति।

एवं तर्हि किमर्थं मानवेषु वैमनस्यं दृश्यते? मानवानां हृदये मस्तिष्के च यदा हिंसा निवसति तदा व्यवहारे हिंसा दृश्यते इति तु जागतिकं सत्यम्। एतस्य परिणामतः यदि मानवजीवनविषये असम्मानः स्यात्, यदि च सर्वेषु मतेषु प्रतिपाद्यमाना दैवभीतिः न स्यात् तर्हि न तत्र विस्मयः।

मानवीयमौल्यानां रक्षणार्थं, तत्पोषकतत्त्वानाम् उन्नयनार्थं च अपेक्षितं प्रयत्नं कर्तुम् एषः समयः। यदि प्रौढाः एतत् कार्यं कर्तुं सिद्धाः न सन्ति तर्हि वर्तमानैः भाविभिः वा तरुणैः एतत् करणीयम्। अवश्यकर्तव्यत्वेन एतत् तैः अङ्गीकरणीयम्।

राष्ट्रपतिः श्रीमान् शङ्करदयालशर्मा विद्यार्थिनः स्मारितवान् अस्ति यत् अगणितवर्षेभ्यः आरभ्य अस्माकं परम्परायां ध्येयनिष्ठता, एकता, अहिंसा, अनुकम्पा, सेवा इत्यादीनां समावेशः स्थितः दृश्यते इति। सः एतदपि उक्तवान् यत् दुःखम् अनुभूतं चेदेव सुखस्य वास्तविकं स्वरूपं ज्ञायते इति। सद्यः तु देशेन दारुणं दुःखम् अनुभूतम् अस्ति। भाविनि काले प्राप्यमाणस्य सुखस्य रक्षणार्थं वयम् एतावता अनुभूतानि दुःखानि विस्मरेम।

सम्पुटः – ९ मार्च – १९९३ संचिका – १२

प्रतिकृतिमूल्यम् रू ६-०० वार्षिक ग्राहकशुल्कम् रू ७२-००



# उत्तिष्ठतु, मम गृहं गच्छाव

| | |
|---|---|
| I – किं रे, शयनं कृतवान्! किम् अस्वास्थ्यम्? | Hey, you are sleeping! Not feeling well? |
| II – न तादृशं किमपि। श्रान्तिः, शरीरे जाड्यम्। मनसः उल्लासः एव नास्ति। | Not that. I am tired and don't feel like doing anything. |
| I – प्रतिदिनं भवान् अधिकं कार्यं करोति। अतः एव एवं जातं स्यात्। अथवा परिसरकारणतः अपि एवं जातं स्यात्। अद्य कर्षणार्थं कः गतवान्? | You work a great deal everyday. So, you would be tired. Change in weather could also be the reason. Who has gone for ploughing today? |
| II – कर्मकरान् प्रेषितवान् अस्मि। | Workers are there. |
| I – पत्नी कुत्र गतवती? | Where's your wife? |
| II – सा अपि क्षेत्रं गतवती अस्ति। | She is also in the field. |
| I – तर्हि उत्तिष्ठतु, मम गृहं गच्छाव। चायं पीत्वा किञ्चित् जल्पनं कृत्वा आगच्छतु तावत्। | Then come along. Let's go to my house. A cup of tea and some chitchat will do you good. |
| II – नैव भोः, अन्यत्र गमने उत्साहः नास्ति मम। | Sorry, I don't wish to go anywhere. |
| I – उत्तिष्ठतु रे! उष्णं चायं पीतं चेत् जाड्यम् अपगच्छति। | Hey, cheer up. A hot cup of tea will remove all your tiredness. |
| II – मास्तु रे। गच्छतु भवान्। पुनः कदाचित् भवतः गृहम् आगमिष्यामि। | No, not now. Please go. I will come some other day. |
| I – पुनः कदाचित् न। इदानीम् एव गमनम्। उत्तिष्ठतु। | No another day. You should come today and now. |
| II – मर्कटग्रहणम् इव भवतः। तिष्ठतु तावत्। क्षणाभ्यन्तरे मुखं प्रक्षाल्य आगच्छामि। | Yours is a monkey grip. I know you will not leave me. OK. Wait a bit. I will wash my face and come. |

वार्ताविशेषः–

# चीनादेशे परिवर्तनम्

सोवियत्सङ्घे साम्यवादिसर्वकारस्य पतनस्य, १९९१ तमे वर्षे जातस्य भङ्गस्य च प्रभावः चीनाप्रभृतिषु केषुचित् साम्यवादप्रधानेषु देशेषु दृष्टः, यस्य च परिणामतः तेषु देशेषु विशेषपरिवर्तनानि दृश्यन्ते।



चीनादेशीयेन कम्यूनिष्ट्-पक्षेण गते अक्टोबर्मासे स्वस्य चतुर्दशं राष्ट्रियाधिवेशनं सञ्चालितम्। समाजवादार्थनीत्यनुगुण (Socialist Market Economy) देशस्य संविधानस्य केचन परिष्काराः कृताः च। अद्यावधि चीनादेशः वेणुभित्त्यन्तर्गतत्वेन वर्ण्यते स्म। विदेशीयस्य मूलधनस्य, साधनस्य, तन्त्रज्ञानस्य वा तत्र प्रवेशः एव न आसीत्। किन्तु गते राष्ट्रियाधिवेशने निर्णीतं यत् इतः परं चीनादेशेन अन्यदेशीयानाम् आर्थिकः तन्त्रज्ञानीयः च सहकारः स्वीक्रियते, तत्क्षेत्रे स्वस्य ज्ञानस्य विनिमयः क्रियते च इति। एतस्य तात्पर्यं यत् विदेशीयानाम् आर्थिकसम्बन्धानां निमित्तं चीनादेशस्य द्वारम् उद्घाटितम् अस्ति इति।

चिरकालात् अनुवृत्ताः प्राचीनविचाराः अर्थनीतयः च देशस्य आर्थिकप्रगतौ विघ्नम् आचरन्ति इति एतस्मिन् सम्मेलने चिन्तितम्। पक्षस्य प्रधानसचिवः स्वस्य २६०० शब्दात्मिकायां निवेदिकायां उक्तवान् यत् यत्र यत्र वाणिज्यसमर्थशक्तीनां प्रवेशार्थम् अनुमतिः दत्ता तत्र सर्वत्र आर्थिकप्रगतिः सिद्धा दृश्यते इति, प्रगतिः अपि काचित् क्रान्तिः एव, यस्याः च लक्ष्यं भवति उत्पादनशक्तेः अभिवर्धनम् इति च।

कम्यूनिष्ट्पक्षेण यः निर्णयः आश्रितः तं 'चीनादेशीया द्वितीया क्रान्तिः' इति मत्वा सर्वत्र सर्वैः हर्षः प्रकटितः। चीनादेशे प्रथमा क्रान्तिः तु १९४९ तमे वर्षे प्रवृत्ता, यस्याः च परिणामतः मावो त्से तुङ्गवर्यस्य नेतृत्वेन युक्तेन कम्यूनिष्ट्पक्षेण शासनसूत्राणि गृहीतानि।

मावोवर्यस्य मरणस्य अनन्तरं (१९७८ तमे वर्षे) तदीयः प्रधानसहचरः जियो पिङ्ग् प्रमुखत्वं प्राप्तवान्। सः चीनादेशस्य आधुनिकीकरणार्थम् आर्थिकनीतेः पुनर्निर्माणार्थं च प्रयत्नं कृतवान्। १९८७ तमे प्रवृत्तस्य कम्युनिष्ट्पक्षीये त्रयोदशीये राष्ट्रियकांग्रेसधिवेशने सः अध्यक्षः आसीत्। ततः सः 'केन्द्रसमिति'तः (पालिट् ब्यूरो) निवृत्तः अभवत्। तदनन्तरं सः पक्षस्य कस्मिंश्चिदपि अधिकारपदे न आसीत्।

इदानीं डेंग् जियो पिंग्वर्यः ८८ वर्षीयः अस्ति। तथापि सः शान्तियुतायाः क्रान्त्याः निमित्तं कार्यं

कुर्वन् एव अस्ति। वर्षात् पूर्वं सः सुस्थिरवाणिज्यनीतिम् अधिकृत्य यत् कार्यं कृतवान् तदेव डेंगसिद्धान्तत्वेन ख्यातम् अस्ति। एषः सिद्धान्तः चीनादेशस्य सुस्थिरतां, सर्वाधिकप्रगतिशीलं युगं च कामयते। एषु दिनेषु राष्ट्रियाधिवेशने यत् निर्णीतं तत् अधिकृतरूपेण डेंगसिद्धान्तस्य स्वीकारः एव अस्ति।

इदानीन्तनः चीनानेता राष्ट्रियकांग्रेसाधिवेशने भागं न ऊढवान्। किन्तु अन्तिमदिने केन्द्रीयसमितेः (पालिट् ब्यूरो) सदस्यैः मेलनं सकृत् उपस्थाय किञ्चित्कालं स्थित्वा गतवान्, तावदेव। केन्द्रीयसमितिसदस्येषु अधिकाः ५० वर्षीयाः, ततोऽपि ज्येष्ठाः वा। डेंगवर्यः चिन्तयति यत् भाविनेतारः युवकाः मम सिद्धान्तम् अङ्गीकृत्य तदनुगुणं कार्यं कर्तुं सिद्धाः भवन्ति इति।




क्रि.पू. १८-१२ शतकमध्यकाले षांग्वंशीयाः चीनादेशं पालितवन्तः आसन्। क्रि.पू. तृतीये शतके चीनादेशः महासाम्राज्यत्वेन प्रवृद्धः आसीत्। तत्समये एव हान्वंशीयाः सम्राजः 'महाभित्तिं' निर्मितवन्तः, यस्याः च दैर्घ्यं १,४५० मैल्, औन्नत्यं च २५ द्वादशाङ्गुलात्मकम् आसीत्। देशरक्षणार्थं तैः एषा भित्तिः निर्मिता आसीत्। ३ शतके क्विन्वंशीयानां शासनं तत्र आरब्धम्। ततः ताङ्ग्वंशः, (७-१० शतकयोः अभ्यन्तरे) सांग्वंशः, (१०-१३ शतकयोः अभ्यन्तरे) चिंग्वंशः च तत्र शासनम् अकरोत्। १९१२ तमवर्षं यावत् चिंग्वंशस्य शासनं प्रवृत्तम्। तस्मिन् वर्षे सुन् यात् सेन्वर्येण राजशासनं निवार्य 'रिपब्लिक्'शासनव्यवस्था आनीता। ततः जनरल् चिंग्-काइ-शेक्, क्योमिन्तांग् च शासनभारं निरूढवन्तौ। द्वितीयजागतिकयुद्धसन्दर्भे (१९३९-१९४५) जपानदेशेन चीनादेशस्य केचन भूभागाः वशीकृताः आसन्। किन्तु युद्धे जपान्देशस्य पराजयः अभवत्। तस्य परिणामतः समग्रं देशं कम्यूनिष्ट्जनानाम् अधीनं जातम्। १९४९ तमे वर्षे अक्टोबर्मासस्य प्रथमे दिनाङ्के 'पीपल्स् रिपब्लिक् आफ् चैना' स्थापितम् अभवत्।



# ऋणप्रतिसङ्ग्रहणम्

कस्मिंश्चित् ग्रामे सूर्यदेवः नाम कश्चित् आसीत्। सः अल्पप्रमाणेन कुसीदवाणिज्यं कुर्वन् जीवति स्म। कदाचित् केनचित् कारणेन सः स्वग्रामतः निर्गतवान्, सरस्वतीपुरे वासम् आरब्धवान् च।

सूर्यदेवः जीवनार्थम् अन्यां वृत्तिं न जानाति स्म। अतः सरस्वतीपुरे अपि कुसीदवाणिज्यम् एव आरब्धवान् सः। द्वित्रेभ्यः तेन ऋणं दत्तम् अपि। किन्तु समये सः तत् ऋणं प्रतिसङ्ग्रहीतुं न शक्तवान्। सूर्यदेवस्य कष्टं दृष्ट्वा प्रतिवेशी उक्तवान्– "चन्दनपुरवासी सुरेशः एतादृशविषयेषु निपुणः इति श्रूयते। भवान् तस्य साहाय्यं प्रार्थयतु" इति।

सूर्यदेवः तस्मिन् एव दिने चन्दनपुरं गतवान्। सुरेशः अपि दृष्टः तेन। सुरेशः विंशतिवर्षीयः कश्चन तरुणः।

'एतद्द्वारा कार्यं सिद्ध्येत्' इति विश्वासः न आसीत् सूर्यदेवस्य। तथापि आगतम् इत्यतः सः सुरेशं स्वकीयं कष्टं निवेद्य साहाय्यं प्रार्थितवान्। सर्वस्य श्रवणस्य अनन्तरं क्षणकालं विचिन्त्य सुरेशः उक्तवान् यत् अहं सप्ताहाभ्यन्तरे सरस्वतीपुरम् एव आगमिष्यामि इति। सूर्यदेवः ततः प्रत्यागतवान्।

वचनानुगुणं सप्ताहाभ्यन्तरे सरस्वतीपुरम् आगतवान् सुरेशः। समये यैः ऋणं न प्रत्यर्पितं तेषां नाम सङ्केतं च निवेदितवान् सूर्यदेवः। 'सूर्यदेवः एतस्मिन् ग्रामे नूतनः। अतः तस्य शक्तिः अत्र न्यूना। अतः एव ऋणप्रत्यर्पणसामर्थ्ये सत्यपि एते सूर्यदेवस्य धनं स्वायत्तीकर्तुम् एव प्रयतमानाः सन्ति' इति चिन्तितवान् सुरेशः।

दिनद्वयस्य अनन्तरं सुरेशः सूर्यदेवम् उक्तवान् यत् ऋणं समये अप्रत्यर्पितवतः सुन्दरेश्वरस्य गृहं गत्वा किं वक्तव्यम् इति।



अनन्तरं सः स्वयं कुत्रापि निर्गतवान्।

सूर्यदेवः सुन्दरेश्वरस्य गृहं गत्वा तं बहिः आहूय उक्तवान् यत् ऋणं प्रत्यर्पयतु इति। तदा सुन्दरेश्वरः उक्तवान्– "भोः, मम हस्ते धनं यदा सङ्गृहीतं भवति तदा अवश्यं ऋणं प्रत्यर्पयिष्यामि। भवतः धनं तु न खादामि अहम्" इति।

किन्तु सूर्यदेवः एतत् वचनं तिरस्कुर्वन्– "यावत् भवान् ऋणं न प्रत्यर्पयति तावत् अहम् इतः न निर्गमिष्यामि" इति दृढस्वरेण उक्तवान्। ततः उभयोः अपि वादविवादः प्रवृत्तः। बहवः जनाः तत्र सम्मिलिताः। इदानीं भीतः सुन्दरेश्वरः सूर्यदेवम् अन्तः आहूय दैन्यं प्रदर्शयन्– "श्रीमन्! यद्दिने मम हस्ते धनं भविष्यति तस्मिन् एव दिने भवतः ऋणं प्रत्यर्पयिष्यामि" इति उक्तवान्।

"एतत् वचनं भवान् केषाञ्चित् ज्येष्ठानां पुरतः वदतु। तथा चेत् एतत्सन्दर्भे कृपां प्रदर्शयामि" इति उक्तवान् सूर्यदेवः।

अनन्योपायः सुन्दरेश्वरः तत्रैव द्वित्रान् ज्येष्ठान् आहूय उक्तवान् यत् यदा हस्ते धनं भविष्यति तदा ऋणम् अवश्यं प्रत्यर्पयिष्यामि इति। तावता कश्चित् तत्र आगतः। सः सुन्दरेश्वरम् उक्तवान्– "क्षम्यतां श्रीमन्! नगरे अद्य कश्चन कोलाहलः आसीत्। अतः समये मया धनं न प्राप्तम् आसीत्। यावत् अहं भवतः धनं प्रतिदातुं चिन्तयन् आसं तावता एव भवदीयः जनः आगत्य निवेदितवान् यत् सूर्यदेवस्य ऋणं प्रत्यर्पयितुम् इच्छन् भवान् धनस्य प्रतीक्षायाम् अस्ति इति। अतः धनं स्वीकृत्य अहं स्वयम् आगतः। इदानीं भवान् निश्चिन्तः खलु? सूर्यदेवस्य ऋणं प्रत्यर्पयतु तावत्" इति।

एतत् श्रुतवतः सुन्दरेश्वरस्य मुखं विवर्णं जातम्। म्लानमुखः सः तस्मात् जनात् धनं स्वीकृत्य सूर्यदेवाय ऋणं प्रत्यर्पितवान्।

वस्तुस्थितिः एषा यत् सुन्दरेश्वरः कस्मैचित् धान्यं विक्रीय धनं प्राप्नुवन् आसीत्। सुरेशः एतत् ज्ञात्वा तं जनम् अन्विष्य सुन्दरेश्वरः मां प्रेषितवान् अस्ति इति असत्यम् उक्त्वा धनस्य आवश्यकतां निवेदितवान्। तस्य उपायः फलितः अभवत्।

चन्द्रशेखरः नाम अन्यः अपि सूर्यदेवात् ऋणं स्वीकृत्य प्रत्यर्पणे विलम्बं कुर्वन् आसीत्। सुरेशः चन्द्रशेखरस्य गमनागमनं परिशीलितवान्। चन्द्रशेखरः पुनः पुनः रामनाथनामकस्य गृहं गच्छति इति ज्ञातवान् सुरेशः। तदनन्तरम् अल्पेन प्रयत्नेन सर्वं ज्ञातवान् सः।



चन्द्रशेखरस्य पुत्रः विद्याभ्यासं समाप्य उद्योगस्य अन्वेषणं कुर्वन् आसीत्। रामनाथद्वारा राजास्थाने पुत्राय कोऽपि उद्योगः दापनीयः इति चन्द्रशेखरस्य विचारः आसीत्। उद्योगम् अचिरात् एव दापयिष्यामि इति रामनाथः उक्तवान् आसीत् अपि।

एतत्सर्वं ज्ञात्वा सुरेशः एकम् उपायं रचितवान्। अनन्तरं सः 'रामनाथस्य समीपं गत्वा कथं व्यवहरणीयम्' इति सूर्यदेवं सम्यक् बोधितवान्।

एतदनुगुणं सूर्यदेवः रामनाथस्य गृहं गत्वा स्वस्य परिचयं निवेद्य चन्द्रशेखरेण स्वीकृतस्य ऋणस्य वार्ताम् अपि निवेद्य– "चन्द्रशेखरः समये ऋणम् अप्रत्यर्पयन् विविधव्याजं कथयन् दिनानि यापयन् अस्ति। मम प्रार्थनाः व्यर्थाः जाताः। भवतः वचनं सः न तिरस्करोति। अतः कृपया तम् उक्त्वा मम ऋणं प्रतिदापयतु। भवतः उपकारम् आजीवनं स्मरिष्यामि" इति प्रार्थितवान्।

रामनाथः तत्क्षणे एव चन्द्रशेखरम् आनाय्य– "किं श्रीमन्! स्वीकृतम् ऋणं समये प्रत्यर्पणीयम् इति विवेकः नास्ति वा भवतः? एवं चेत् मम व्यवहारे अपि भवान् प्रामाणिकतां प्रदर्शयेत् इत्यत्र कः विश्वासः?" इति पृष्टवान्।

इदानीं चन्द्रशेखरस्य सङ्कटपरिस्थितिः। अतः सः तत्क्षणे एव गृहं गत्वा धनम् आनीय रामनाथस्य पुरतः एव सूर्यदेवाय दत्तवान्। सूर्यदेवः रामनाथं कृतज्ञतावचनानि उक्त्वा ततः निर्गतवान्।

एवं सुरेशः स्वबुद्धिमत्तायाः बलेन जनद्वयतः ऋणं प्रतिदापितवान् आसीत्। एतेन सन्तुष्टः सूर्यदेवः कृतज्ञतापूर्वकं सुरेशम् उक्तवान्– "भवता महान् उपकारः कृतः। शङ्करनारायणनामकेन एकेन इतोऽपि ऋणं

न प्रत्यर्पितम्। तदपि भवान् प्रतिदापयति चेत् अहम् उपकृतः भवामि" इति।

"मित्र! शङ्करनारायणः वस्तुतः कष्टे अस्ति। तस्य व्यवहाराः प्रामाणिकाः। यदा धनं हस्ते भवति तदा सः अवश्यम् ऋणं प्रत्यर्पयिष्यति। यतः शङ्करनारायणम् अहं बहोः कालतः जानामि। अतः निर्धनात् सज्जनात् तस्मात् इदानीम् ऋणप्रतिस्वीकरणं मा चिन्तयतु" इति उक्तवान् सुरेशः।

"एवं तर्हि मया तस्मै दत्तम् ऋणं सर्वथा हस्तच्युतम् इति भावयामि वा अहम्?" इति कोपेन पृष्टवान् सूर्यदेवः।

"तथा मास्तु। वस्तुतः ऋणप्रतिसङ्ग्रहणार्थं मया यत् साहाय्यं कृतं तस्य प्रतिफलरूपेण भवता मह्यं किमपि दातव्यम् आसीत् खलु? तत् मा ददातु। तत् शङ्करनारायणेन प्रतिदत्तम् ऋणम् इति भावयित्वा स्वसमीपे एव स्थापयतु" इति उक्तवान् सुरेशः।

एतत् श्रुत्वा सूर्यदेवः मौनं स्थितवान्। तदा सुरेशः पुनः उक्तवान्– "अन्यत् एकं कटुसत्यं वक्तुम् इच्छामि। यावत् भवान् प्रामाणिकतया अत्याशां विना व्यवहरति तावत् जनाः भवति आदरवन्तः भवन्ति। अतः जनानाम् आदरं प्राप्तुं प्रथमं प्रयत्नं करोतु। अधिकवृद्धिप्राप्त्याशा कदापि मा भवतु" इति।

सुरेशस्य उदात्तं चिन्तनम्, उदारतां, परोपकारशीलतां च दृष्ट्वा आश्चर्यं सन्तोषं च अनुभवन् सूर्यदेवः– "मित्र! अनुकरणीयः व्यवहारः भवतः। शङ्करनारायणतः ऋणं न प्रतिस्वीकरोमि अहम्। किन्तु उपकृतवते भवते प्रतिफलरूपेण मया किमपि दातव्यं खलु? अपूर्वम् उपायनम् एव दातुम् इच्छामि। मम पुत्रीं सुवर्चलां पृष्ट्वा निर्णयं श्रावयामि तावत्" इति उक्त्वा गृहस्य अन्तः गतवान्।

द्वारस्य पृष्ठतः एव स्थित्वा सर्वं श्रुतवती सूर्यदेवपुत्री सुवर्चला विकसितारक्तवदना लज्जया पितरं दृष्ट्वा शिरः अवनमय्य पाकशालां प्रति धावितवती।





# व्याघ्रेश्वरभूपतिः

दण्डकारण्यस्य समीपे स्थितम् एकं लघु राज्यं व्याघ्रपुरं व्याघ्रेश्वरभूपतिः पालयन् आसीत्। अन्वर्थं नाम आसीत् तस्य।

कदाचित् कश्चन निर्धनः पण्डितः तदीयम् आस्थानम् आगत्य तं 'भूपतिः' इति प्रशंसितवान् आसीत्। तदारभ्य व्याघ्रेश्वरः स्वनाम्ना सह भूपतिशब्दम् अपि योजितवान् आसीत्। तदा कविः तं प्रशंसितवान् यत् भवान् 'प्रत्यक्षदेवता' इति। एतेन तु व्याघ्रेश्वरभूपतिः नितरां सन्तुष्टः।

तेषु एव दिनेषु हिमालये बहूनि वर्षाणि तपः कृत्वा बह्वीः सिद्धीः प्राप्तवान् कश्चित् योगिराजः व्याघ्रपुरम् आगतवान्। जनाः योगिराजे महतीं श्रद्धां प्रदर्शयन्तः तस्य प्रवचनं महत्या भक्त्या श्रुतवन्तः।

गुप्तचराः एतां वार्तां राजानं निवेदितवन्तः। ते एतदपि निवेदितवन्तः यत् जगतः सृष्टिकर्ता, पालकः च भगवान् कश्चित् अन्यः अस्ति इति जनान् बोधयन् सः संन्यासी 'राजा भगवान्' इत्येतस्य तत्त्वस्य विरुद्धं प्रचारं कुर्वन् अस्ति इति।

एतत् श्रुतवतः व्याघ्रेश्वरभूपतेः मुखम् आरक्तं जातम्। सः झटिति भटान् आदिष्टवान्– "भवन्तः तं संन्यासिनम् अविलम्बेन अत्र आनयन्तु" इति।

भटाः ततः निर्गत्य तं संन्यासिनम् आनीय राज्ञः पुरतः उपस्थापितवन्तः। योगिराजं क्रोधेन पश्यन् उक्तवान् राजा व्याघ्रेश्वरभूपतिः– "अहम् अस्मि भूपतिः। अस्माकम् आस्थानपण्डितः सर्वज्ञचूडामणिः उक्तवान् अस्ति यत् राजा प्रत्यक्षदेवता इति। किन्तु एवं हि श्रूयते यत् ऋते मत्तः अन्यः कश्चित् भगवान् अस्ति भवान् जनान् बोधयन् अस्ति इति। भवतः एषः व्यवहारः राजविरोधी अस्ति। भवन्तम् एतत्क्षणे एव शूलम् आरोपयिष्यामः वयम्" इति।

तदा योगिराजः मन्दहारपूर्वकम् उक्तवान्– "राजन्! सर्वज्ञचूडामणिः यथा तथा अन्यौ अपि द्वौ मन्त्रिणौ भवतः स्तः इति श्रुतं मया। अहं तान् मन्त्रिणः एकं प्रश्नं प्रष्टुम् इच्छामि। तेषाम् उत्तरं श्रुत्वा भवान् मां शूलम् आरोपयतु नाम" इति।

राजा एतत् अङ्गीकृतवान्। योगिराजः त्रिषु तालपत्रेषु एकं प्रश्नं लिखितवान्– "मृत्तिका नाम का?" इति। प्रश्नसहितम् एकैकं तालपत्रं एकैकस्मै मन्त्रिणे दत्तम् अपि। तस्य प्रश्नस्य उत्तरम् एकः मन्त्री एवं लिखितवान् यत् पृथिव्याः मूलद्रव्यम् एव मृत्तिका इति। अपरः लिखितवान् यत् द्रवरूपात् भिन्नः पदार्थः मृत्तिका इति। अन्यः लिखितवान् यत् सर्वेषाम् अपि जीविनां वस्तूनां च अन्तिमः आश्रयः मृत्तिका इति।

योगिराजः तानि तालपत्राणि राज्ञे दत्त्वा उक्तवान्– "राजन्! सर्वं प्रत्यक्षं दृष्टं खलु– विवेकिनः अपि भवतः मन्त्रिणः सामान्यायाः मृत्तिकायाः विषये कथं भिन्नाभिप्रायवन्तः सन्ति इति? एवं स्थिते महोन्नतशक्तेः भगवतः विषये किम् एकाभिप्रायः शक्यः?" इति।

राजा शिरः अवनमय्य स्थितवान्। तदा योगिराजः पुनः उक्तवान्– "राजा प्रत्यक्षदेवता इति वचनम् औपचारिकम्। राजा आदरपात्रं स्यात् नाम, किन्तु सः सर्वशक्तः भगवान् तु सर्वथा न। योगिनाम् अपि अगम्यः देवः क्व? क्रोधगर्वादिपात्रं राजा क्व?" इति।

एतत् श्रुत्वा क्षणकालस्य मौनस्य अनन्तरं राजा सिंहासनात् अवतीर्य योगिराजस्य पादौ गृहीत्वा– "महात्मन्! भवतः उपदेशतः मयि विवेकः उदितः अस्ति। अहं भवतः शिष्यः अस्मि। योग्येन मार्गदर्शनेन माम् उद्धरतु" इति प्रार्थितवान्।

योगिराजः प्रीत्या तम् उत्थापितवान्। कानिचन दिनानि तत्र स्थित्वा राजानं बहुधा बोधितवान्। राजा विवेकं प्राप्य योग्येन क्रमेण शासनं कुर्वन् ख्यातिं प्राप्तवान्।





# माया-भवनम्
## १०

(विद्यावत्याः अदृश्यतायाः अनन्तरं जगत्पत्याचार्यः एकवारम् अपि न दृष्टः इत्यतः तस्मिन् सन्देहं प्राप्तवान् वाचस्पत्याचार्यः। एतत् वचनं सः राजानम् उक्तवान्। युवराज्ञीम् अन्वेष्टुं गतः महेन्द्रनाथः अरण्यमध्यस्थं मायाभवनं गतवान्। तत्र द्वाररक्षकोद्योगं प्राप्तवान्, ततः जागरूकतया तत्परिसरस्य परिशीलनं कृतवान् च। तदनन्तरम्....)

अनन्तरदिने सायङ्काले महेन्द्रनाथः किञ्चित्पूर्वम् एव द्वारसमीपं गतवान्। मायाभवनस्य उद्यानं प्रति काऽपि आगच्छन्ती अस्ति वा इति प्रतीक्षां कृतवान् च। अल्पे एव काले तिस्रः तरुण्यः भवनात् निर्गतवत्यः। ताभिः सह वृद्धा न आसीत्। ताः तिस्रः अपि समानानि वस्त्राणि आभरणानि च धृतवत्यः आसन् इत्यतः ह्यः दृष्टा युवतिः का इति झटिति ज्ञातुं न शक्तवान् महेन्द्रनाथः।

अल्पे एव काले एका युवतिः भवनं प्रतिगता। अवशिष्टयोः अन्यतरा उद्याने विहारं कर्तुम् उद्युक्ता अभवत्। अपरा कस्मिंश्चित् आसने उपविश्य विहरन्त्याः व्यवहारान् जागरूकतया परिशीलयन्ती स्थितवती।

महेन्द्रनाथः कस्यचित् वृक्षस्य पृष्ठतः



वृक्षसमीपम् आगता तदा महेन्द्रनाथः शरीरं किञ्चित् अग्रे प्रसार्य मुखं प्रसारितवान्। तदा पदानि स्थापयन्ती एव सा युवतिः मुखस्य उपरि अङ्गुलिं संस्थाप्य 'किमपि मा वदतु इदानीम्' इति हस्तसङ्केतेन सूचितवती।

तावता दूरे उपविष्टा परिचारिका एतस्याः समीपम् आगतवती। 'विहारः पुनः श्वः' इति उक्त्वा विना वचनं तया सह भवनं प्रति प्रस्थितवती।

तस्यां रात्रौ महेन्द्रनाथः जागरूकतया रक्षणकार्यं कृतवान्। मायाभवनस्य अट्टे स्थिते प्रकोष्ठे दीपप्रकाशः दृश्यते स्म। महेन्द्रनाथः लक्षितवान् यत् अद्य यत्र दीपः दृश्यते तत्र ह्यः दीपः न दृष्टः आसीत् इति। अतः सः अवगतवान्– 'प्रतिदिनम् एषा सुन्दरी युवतिः भिन्ने भिन्ने प्रकोष्ठे स्थाप्यते' इति। एषा एव युवराज्ञी इति, अन्ये झटिति यथा जानीयुः तथा कर्तुं युवराज्ञ्या यादृशं वस्त्रं धृतं तादृशम् एव वस्त्रं परिचारिकाः अपि धरन्ति इति च ज्ञातवान् महेन्द्रनाथः।

ततः अल्पे एव काले द्वारपालकः तत्र आगतवान्। तं पृष्टवान् महेन्द्रनाथः– "मित्र! अद्य भवान् सर्वथा न दृष्टः एव। कुत्र गतः आसीत् भवान्?" इति।

"अद्य अन्ये केचन पण्डिताः आगताः सन्ति। तेषां परिचर्या मया एव करणीया आसीत्। अतः तत्रैव आसम्। भवान् तु जागरूकतया तिष्ठतु सदापि" इति उक्त्वा सः

निलीय स्थितवान्। विहरन्ती युवतिः यदा समीपम् आगता तदा महेन्द्रनाथः मन्दस्वरेण आहूतवान्- "युवराज्ञि! आर्ये, विद्यावति!" इति। तदा सा युवतिः आश्चर्यम् अनुभवन्ती शिरः उन्नीय यतः स्वरः आगतः तां दिशं दृष्टवती। किन्तु तया तत्र कोऽपि न दृष्टः। सा ततः अग्रे गतवती।

विहरन्ती युवराज्ञी पुनः यदा वृक्षस्य समीपम् आगता तदा महेन्द्रनाथः पुनः तां मन्दस्वरेण आहूतवान्। तदा युवतिः क्षणकालं तत्रैव स्थितवती। अनन्तरं, परिचारिका सन्देहं प्राप्नुयात् इति चिन्तीयत्वा किञ्चिद्दूरम् अग्रे गत्वा प्रत्यागतवती। यदा सा युवतिः पुनः

द्वारपालकः ततः निर्गतवान्।

अनन्तरदिने प्रातः अपि पाकशालायां भोजनपदार्थान् नयन्त्यौ परिचारिके दृष्टे महेन्द्रनाथेन। ताभ्यां सह अद्य वृद्धा नास्ति इत्यंशम् अवलोकितवान् सः।

तस्मिन् दिने सायङ्काले विहारार्थं किञ्चित्पूर्वम् एव आगतवती आसीत् सा युवतिः। तया सह एका एव परिचारिका आसीत्। उभे अपि किञ्चित्कालम् उद्याने विहारं कृतवत्यौ। अनन्तरं परिचारिका एकत्र उपविष्टवती। युवराज्ञी विहारव्याजेन सान्द्रवृक्षाणां मध्यं गतवती। ह्यः यत्र निलीय स्थितम् आसीत् तत्रैव अद्यापि स्थितवान् आसीत् महेन्द्रनाथः। यदा युवतिः समीपम् आगता तदा सः मन्दस्वरेण उक्तवान्– "युवराज्ञि! अहं महेन्द्रनाथः। वीरगिरितः आगतः अस्मि" इति।

एतत् वचनं श्रुत्वा अपि सा युवतिः अग्रे गता। किञ्चित्कालानन्तरं परिवृत्य प्रत्यागत्य मन्दस्वरेण महेन्द्रनाथम् उक्तवती– "आम्, अहं युवराज्ञी विद्यावती अस्मि। इतः कथञ्चित् निर्गन्तव्यं मया" इति।

"आर्ये, कः भवतीम् अपहृत्य अत्र आनीय स्थापितवान्?" इति पृष्टवान् महेन्द्रनाथः।

"अहं तत् न जानामि। काचित् वृद्धा माम् अत्र आनीतवती। सा प्रायः जानीयात्" इति उत्तरं दत्तवती विद्यावती।



"का सा वृद्धा? कुत्र निवसति सा?" इति पृष्टवान् महेन्द्रनाथः।

"सा आत्मनः नाम 'कमला' इति वदति। राजभवनस्य वृद्धा परिचारिका कमला इव दृश्यते एषा अपि। किन्तु ह्यः आरभ्य सा न दृष्टा मया" इति उक्तवती विद्यावती।

"भवत्या सह स्थितानां परिचारिकाणां किं नाम?" इति पृष्टवान् महेन्द्रनाथः।

"परिचारिकाः बह्व्यः सन्ति। सर्वाः प्रायः समानाकारिकाः। तासां नाम न स्मरामि अहम्" इति उक्तवती विद्यावती।

"ताः परिचारिकाः भवत्या सह वार्तालापं न कुर्वन्ति वा?" इति पृष्टवान् महेन्द्रनाथः।

"यावत् अनिवार्यं तावत् एव वचनम्। मम



अपहरणं किमर्थं कृतम् इति तु न ज्ञायते। यावच्छीघ्रम् इतः विमोचनं प्राप्य निर्गन्तव्यं मया" इति उक्त्वा युवराज्ञी उपविष्टायाः परिचारिकायाः समीपं गतवती। तावता तत्र अपरा परिचारिका आगता आसीत्। ताभ्यां सह मायाभवनं प्रविष्टवती युवराज्ञी।

'भगवतः कृपया युवराज्ञी सकुशलम् अस्ति। ताम् अत्र कः आनीतवान् स्यात्? एतस्य मायाभवनस्य स्वामी एव ताम् अपहृतवान् स्यात् वा? किन्तु एषः स्वामी तादृशः दुष्टः इव न भासते। तर्हि अपहर्ता अन्यः कः स्यात्? कं लाभं मनसि निधाय अपहरणं कृतं स्यात्? युवराज्ञी तु दृष्टा। इतः परं राजधानीं प्रति सकुशलं प्रापयितुं कः उपायः?' इत्येवं बहुधा चिन्तयन् उपविष्टवान् महेन्द्रनाथः।

"भवान् नितरां श्रान्तः इव भाति" इत्येवं वदन् द्वारपालकः तत्र आगतवान्। महेन्द्रनाथः झटिति उत्तिष्ठन् उक्तवान् – "न मित्र! भवतः मार्गदर्शनस्य अनुगुणम् अद्य किञ्चित्पूर्वम् एव आगत्य कर्तव्ये उद्युक्तः आसम्। कार्यान्तराभावतः रमणीयम् उद्यानं पश्यन् आसम्" इति।

"उद्याने काश्चन महिलाः दृष्टाः वा भवता?" इति पृष्टवान् द्वारपालकः।

"न खलु?" इति उक्तवान् महेन्द्रनाथः।

"भवान् दृष्टवान् चेदपि न काऽपि आपत्तिः। किन्तु इतः परं भवान् ताः द्रष्टुं न शक्नोति। आगताः पण्डिताः सर्वे गन्तुम् उद्युक्ताः सन्ति। 'शिबिका आनेतव्या' इति स्वामी आदिष्टवान् अस्ति। स्वामी कदापि शिबिकायां न उपविशति। प्रायः एतत् भवनम् आगतायाः अपूर्वयुवत्याः प्रयाणार्थम् एव शिबिका स्यात् इति अहं भावयामि। कस्यचित् देशस्य युवराज्ञी सा निर्गता चेत् भवने स्थिताः सर्वाः परिचारिकाः अपि निर्गमिष्यन्ति" इति हसन् उक्तवान् द्वारपालकः।

"एवं वा?" इति विशेषकुतूहलम् अप्रदर्शयन् उक्तवान् महेन्द्रनाथः।

"अद्य रात्रौ केवलं भवता जागरूकतया रक्षणं करणीयम्" इति उक्त्वा ततः

निर्गतवान् द्वारपालकः।

'अद्यैव युवराज्ञ्याः रक्षणार्थं किमपि करणीयम्' इति निश्चितवान् महेन्द्रनाथः। मध्यरात्रः अतीतः। भवनस्य सर्वे दीपाः निर्वापिताः अभवन्। महेन्द्रनाथः विना शब्दं भवनस्य समीपं गतवान्। प्रधानद्वारं तु पिहितम् आसीत्। सः हस्तेन किञ्चित् नोदनं कृतवान्। द्वारम् अन्तर्भागे कीलितम् आसीत् इत्यतः न उद्घाटितम्। अन्तः गन्तुं समीपे कोऽपि मार्गः स्यात् वा इति परिशीलितवान् महेन्द्रनाथः। किन्तु ऋते प्रधानद्वारात्, अन्यत् द्वारं न दृष्टं तेन। सः प्रत्यागत्य वामहस्तेन बलात् द्वारस्य नोदनं कृतवान्। झटिति द्वारम् उद्घाटितम् अभवत्।



महेन्द्रनाथः अन्तः गतवान्। मध्ये गमनागमनार्थं स्थलम् आसीत्। तदुभयतः प्रकोष्ठाः आसन्। तेषां दर्शनतः एव ज्ञायते स्म यत् एतेषु जनवसतिः नास्ति इति। महेन्द्रनाथः अग्रे गतवान्। तत्र अट्टम् आरोढुं रचितानि सोपानानि दृष्टानि। तानि आरुह्य अट्टभागं गतवान् महेन्द्रनाथः। तत्रापि अधोभागे इव सञ्चारस्थलम् उभयतः प्रकोष्ठाः आसन्। महेन्द्रनाथः वामहस्तेन यत् प्रकोष्ठद्वारं स्पृशति तत् कीलितम् चेदपि उद्घाटितं भवति स्म।

एतेन क्रमेण उद्घाटितम् एकं प्रकोष्ठं प्रविष्टवान् महेन्द्रनाथः। प्रवेशसमनन्तरम् एव सः क्षणकालं चकितः, यतः पुरतः कश्चित् स्थितः इव! किन्तु भीतिम् अपनीय यदा परिशीलितं तदा ज्ञातं यत् पुरतः स्थिते दर्पणे दृश्यमानं स्वस्य प्रतिबिम्बम् एव तत् इति। समग्रे प्रकोष्ठे भित्तिषु दर्पणाः योजिताः आसन्। अतः यत्र दृश्यते तत्र प्रतिबिम्बं दृष्टिगोचरं भवति स्म। महेन्द्रनाथः ततः बहिः आगत्य वामहस्तेन अपरस्य प्रकोष्ठस्य द्वारं स्पृष्टवान्। यदा द्वारम् उद्घाटितं तदा अन्तः गत्वा दृष्टवान् सः। सः अपि प्रकोष्ठः रिक्तः आसीत्।

ततः बहिः आगत्य अपरं प्रकोष्ठं प्रविष्टवान् सः। तत्र मञ्चस्य उपरि सुप्ताः काश्चन दृष्टाः। 'अत्र युवराज्ञी स्यात् वा' इति जागरूकतया परिशीलितवान् महेन्द्रनाथः।



तत्र युवराज्ञी यदा न दृष्टा तदा अपरं प्रकोष्ठं प्रविष्टवान् सः। तत्रापि काश्चन सुप्ताः परिचारिकाः दृष्टवान् सः।

अन्ते महेन्द्रनाथः पञ्चमं प्रकोष्ठं प्रविष्टवान्। तत्र हंसतूलिकातल्पे काचित् युवती सुप्ता आसीत्। दर्शनात् एव महेन्द्रनाथः ज्ञातवान् यत् एषा एव युवराज्ञी इति। यदा सः तस्याः समीपं गन्तुम् उद्युक्तः तदा तस्य वामहस्तस्य अङ्गुल्यां स्थितम् अङ्गुलीयकं सकृत् प्रकाशितम् अभवत्। 'एतस्य अङ्गुलीयकस्य प्रभावेण एव अहं पिहितानि अपि द्वाराणि उद्घाट्य एतावत्पर्यन्तम् आगन्तुं शक्तवान्' इति ज्ञातवान् महेन्द्रनाथः। सः युवराज्ञ्याः समीपं गत्वा हस्तस्पर्शेन ताम् उत्थापितवान्। आश्चर्यम् अनुभवन्ती युवराज्ञी झटिति उत्थितवती। सा महेन्द्रनाथस्य अभिज्ञानं प्राप्य पृष्टवती– "भवान् एतावद्दूरं कथम् आगन्तुं शक्तवान्?" इति। अनन्तरं महेन्द्रनाथम् अनुसरन्ती प्रकोष्ठात् बहिः आगतवती सा।

तदा महेन्द्रनाथः उक्तवान्– "तत्सर्वम् अनन्तरं वदिष्यामि। श्वः इतः भवत्याः नयनार्थं शिबिकायाः व्यवस्था कृता इति श्रूयते। भवनस्वामिना एषा व्यवस्था कारिता" इति।

"श्वः मां सः कुत्र नेष्यति?" इति आश्चर्येण पृष्टवती विद्यावती।

"तत् अहं न जानामि। अहं तु एतत् ज्ञातुम् इच्छामि यत् इतः तत्र गमनं भवत्या अङ्गीकृतं वा इति" इति उक्तवान् महेन्द्रनाथः।

"पञ्जरबन्धं को वा इच्छेत्? अहं मातापित्रोः समीपं गन्तुम् इच्छामि। किं भवान् मम साहाय्यं कुर्यात्?" इति पृष्टवती विद्यावती।

"अवश्यं करोमि। तदर्थम् एव अहम् अत्र आगतः। भवतीम् अन्विष्य राजभवनं प्रापणीयम् इत्येव अहं गृहात् निर्गतः। महाराजस्य अनुज्ञा अपि प्राप्ता अस्ति मया। भवती मयि विश्वस्यात् इति उद्देशेन एकम् अभिज्ञानचिह्नम् अपि ज्ञात्वा आगतवान्

अस्मि। भवत्याः वामभुजे कृष्णकालकम् अस्ति इति सूचितं राज्ञा। 'एषः विषयः उक्तः चेत् विद्यावती भवति अवश्यं विश्वासं प्राप्नोति' इति सूचितवान् आसीत् राजा" इति उक्तवान् महेन्द्रनाथः।

एतत् श्रुतवती युवराज्ञी विश्वासपूर्वकं साभिमानं च महेन्द्रनाथं पश्यन्ती उक्तवती– "भवता यत् उक्तं तत् सत्यम्। भवति विश्वसिमि अहम्। किमर्थं विलम्बः? इतः गच्छाव तावत्" इति।

"इदानीम् इतः निर्गमनम् एव वरम्। मम समीपे सिंहद्वारस्य कुञ्चिका अस्ति। अतः भवनात् निर्गमने कोऽपि क्लेशः नास्ति। किन्तु एतस्मिन् मध्यरात्रे भवती अरण्यमार्गेण गन्तुं शक्नुयात् वा?" इति सन्देहेन पृष्टवान् महेन्द्रनाथः।

"कुतो न? अत्र स्थितिः एव भयं जनयति। अत्र स्थितं चेत् न जाने, प्रातः विपत् केन रूपेण आपतेत् इति। मया सह भवान् तु अस्ति एव खलु? अतः न काऽपि भीतिः मम। अलं विलम्बेन। गच्छाव तावत्" इति वदन्ती युवराज्ञी गन्तुं सिद्धा जाता।

"यावत् भवनात् बहिः न गम्यते तावत् मत्तः किञ्चित् दूरे तिष्ठन्ती भवती माम् अनुसरतु। इतस्ततः पश्यन्ती जागरूकतया आगच्छतु" इति उक्त्वा अग्रे प्रस्थितवान् महेन्द्रनाथः।

उभौ अपि भवनस्य प्रधानद्वारस्य समीपम् आगतवन्तौ। सर्वत्र मौनं प्रसृतम् आसीत्। महेन्द्रनाथः स्वसमीपे स्थितायाः कुञ्चिकायाः साहाय्येन प्रधानद्वारं जागरूकतया उद्घाटितवान्। ततः उभौ अपि बहिः गतवन्तौ। अन्तर्भागतः कोऽपि यथा न आगच्छेत् तथा बहिः द्वारं कीलितवान् महेन्द्रनाथः।

"आवाम् इदानीं मायाभवनात् बहिः आगतवन्तौ। अग्रे गन्तुं कः मार्गः? वीरगिरिं प्रति गन्तुं मार्गं जानाति वा भवान्?" इति महेन्द्रनाथं पृष्टवती युवराज्ञी।

–(अनुवर्तते)






# देवताकुसुमम्

यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः इत्येतां नीतिम् अनुसरन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! विशालस्य राज्यस्य राज्ञा सता भवता सुखेन जीवनं यापनीयम्। एवं स्थिते अपि भवान् घोरे एतस्मिन् श्मशानमार्गे, तत्रापि मध्यरात्रे, कस्य सुखस्य प्राप्त्यर्थम् उद्युक्तः अस्ति इति तु अहं न जानामि। अतीन्द्रियाम् अलौकिकीं वा शक्तिं वशीकृत्य चिरयौवनं प्राप्तव्यं, तद्द्वारा सदा सुखम् एव अनुभोक्तव्यम् इति तु भवतः विचारः न स्यात् खलु? यदि तादृशः विचारः स्यात् तर्हि एतादृशं कार्यं परित्यज्य राज्यं प्रति गमनम् एव वरम् इति अहं भावयामि। यतः तादृशशक्तीनां मानवस्वभावस्य च सङ्घर्षः

## वेतालकथा



यदा भवति तदा मानवः असाफल्यं प्राप्नोति। राज्ञः वसन्तवर्मणः जीवनम् एव अत्र उदाहरणम्। विषयस्य स्पष्टतार्थं, भवतः मार्गायासस्य निवारणार्थं च वसन्तवर्मणः कथां विस्तरेण शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं वैजयन्तीपुरं वसन्तवर्मा नाम राजा पालयन् आसीत्। सः वृद्धः जातः आसीत्। किन्तु तस्य अपत्यं न आसीत्। अतः राज्ञः मनसि चिन्ता सदा भवति स्म यत् मम जीवितकालस्य अनन्तरम् एतस्य राज्यस्य पालनार्थं योग्यः उत्तराधिकारी कोऽपि नास्ति इति। यथा यथा वार्धक्यं वर्धते तथा तथा राज्ञः चिन्ता अपि वर्धते स्म।

पूर्णिमारात्रौ कदाचित् राजा वसन्तवर्मा मन्त्रिणा चरणगुप्तेन सह राजभवनस्य चन्द्रशालायां विहरन् मन्त्रिणम् उक्तवान्– ''मन्त्रिवर्य! एतां मनोज्ञां कौमुदीं, रमणीयम् उद्यानम्, वैभवोपेतं भवनं, सुविशालं राज्यं च परित्यज्य अज्ञातं लोकं प्रति गन्तव्यं खलु। जातस्य मरणं ध्रुवम्। आपततः मरणात् कोऽपि कमपि रक्षितुं न शक्नोति। एवं खलु?'' इति।

'अपत्यं नास्ति इत्यतः एषा मृत्युभीतिः राज्ञः मनसि तिष्ठति' इति ज्ञातवान् मन्त्री। किन्तु एषा भीतिः कथं निवारणीया इति तु सः अपि न जानाति। अतः सः मौनं स्थितवान् आसीत्। तावता आकाशात् एकं देवताकुसुमम् राज्ञः पुरतः पतितम्।

महाराजः महता आश्चर्येण अवनम्य तत् कुसुमम् उन्नीय सकृत् आघ्राय मन्त्रिणम् उक्तवान्– ''मन्त्रिवर्य! अहो, अपूर्वं पुष्पम्! एतस्य सौगन्ध्यं सौन्दर्यं च वर्णयितुं मम समीपे शब्दाः एव न सन्ति'' इति।

''प्रभो! आकाशमार्गेण देवाः गन्धर्वाः च सञ्चरन्ति इति श्रूयते। तेषु कस्यचित् हस्ततः देववृक्षतः वा पतितं कुसुमं स्यात् एतत्। अतः एव महाप्रयोजनकारि अपि स्यात् कदाचित्। आस्थानपुरोहितः एतद्विषये पृष्टः चेत् किमपि ज्ञायेत'' इति उक्तवान् मन्त्री।

अनन्तरदिने राजा राजपुरोहितम् आहूय प्रवृत्तं समग्रं निवेद्य देवपुष्पं प्रदर्शितवान्। तत्

पुष्पं सुसूक्ष्मं परिशील्य उक्तवान् राजपुरोहितः– "महाप्रभो! गन्धर्वस्त्रीभिः महता आदरेण ध्रियमाणम् अपूर्वं पुष्पम् एतत्। अमृतांशवर्धिनी इति एतस्य पुष्पस्य नाम। वैद्यशास्त्रे एवं हि उच्यते यत् एतत् यौवनं पुनर्दापयितुं समर्थं भवति इति। युवकः युवतिः वा स्वच्छेन मनसा इष्टदेवं स्मृत्वा एतत् पुष्पं सकृत् आघ्राय स्वस्य इष्टतमाय वृद्धाय स्वकीयं यौवनं दातुं शक्नोति। एतत् अमृतांशवर्धिनीपुष्पं यौवनदानविषये एकमात्रस्य साहाय्यं कर्तुं शक्नोति, न तु बहूनाम्" इति।



एतत् श्रुत्वा महाराजः नितरां सन्तुष्टः। सः आनन्देन उद्विग्नः सन् मन्त्रिणम् उक्तवान्– "मन्त्रिवर्य! अद्यैव सडिण्डिमघोषं वार्तां प्रसारयतु यत् यः राज्ञे यौवनं ददाति तस्मै अमूल्यः पुरस्कारः अर्धं राज्यं च दीयते, विशेषतः सत्क्रियते च इति" इति।

राज्ञः आदेशस्य अनुगुणं वार्ता प्रसारिता। सप्ताहः अतीतः। किन्तु राज्ञे यौवनं दातुं कोऽपि अग्रे न आगतः। एतां स्थितिं दृष्ट्वा राजा खिन्नः। इष्टपूर्त्यै इतः परं किं करणीयम् इति चिन्तयन् उपविष्टवान् राजा।

महाराजस्य परिस्थितिं दृष्ट्वा मन्त्री नितरां खिन्नः। सः कैश्चित् भटैः सह देशे सञ्चारं कृतवान्। एवं सञ्चारसमये कस्मिंश्चित् ग्रामे मार्गपार्श्वे उपविष्टौ द्वौ भिक्षुकौ दृष्टौ। तयोः अन्यतरः अन्धः आसीत्। अपरः केनचित् चर्मव्याधिना ग्रस्तः आसीत्। किन्तु तयोः उभयोः अपि वयः प्रायः पञ्चविंशतिः वर्षाणि।

मन्त्री तयोः समीपं गत्वा मृदुवचनैः उक्तवान्– "गतसप्ताहे राज्ञा सडिण्डिम-घोषं प्रसारिता वार्ता श्रुता खलु भवद्भ्याम्? भवन्तौ एकत्र एव उपविशतः चेत् भिक्षाप्राप्तौ स्पर्धा भवति। वृथा स्पर्धा किमर्थम्? कश्चित् एकः अग्रे आगत्य राज्ञे यौवनं ददातु तावत्" इति।

एतत् श्रुत्वा अपि तौ उत्साहं न प्रकटितवन्तौ। तदा किञ्चिदिव क्रुद्धः मन्त्री तौ भिक्षुकौ पृष्टवान्– "किं रे, अर्धराज्यस्य अपेक्षया अपि भिक्षायाचनम् एव वरम् इति

चिन्तयतः वा भवन्तौ?" इति।

तदा अन्धः भिक्षुकः– "श्रीमन्, अहं तु अन्धः अस्मि। अन्धस्य मम किम् अर्धराज्येन, किम् इन्द्रपदव्या वा? राज्ञः इष्टं कश्चित् अन्यः पूरयतु नाम" इति नीरसध्वनिना उक्तवान्।

झटिति द्वितीयः भिक्षुकः उक्तवान्– "आर्य, यदि अहं महाराजाय यौवनं दद्यां तर्हि अहं वृद्धः भवेयम्। वृद्धस्य किम् अर्धराज्येन? इदानीम् एव एतेन घोरेण चर्मव्याधिना पीड्यमानः अस्मि। एतेन सह वार्धक्यम् अपि प्राप्तं चेत् जीवनं नरकसदृशं भवेत्" इति।

तयोः उत्तरं श्रुतवतः मन्त्रिणः मनः उद्विग्नं जातम्। 'भिक्षुकयोः पुरतः अपि अहं निरुत्तरः जातः!' इति खेदम् अनुभवन् मन्त्री ततः राजधानीं प्रतिगतवान्।

यदा मन्त्री राजास्थानं प्रविष्टवान् तदा तत्र राजा लुण्ठाकस्य रामसिंहस्य विचारणां कुर्वन् आसीत्। रामसिंहः विंशतिवर्षीयः तरुणः।

रामसिंहः राजानम् उक्तवान्– "महाप्रभो! अहं राजधान्यां वञ्चनया धनं सम्पादितवतां धनिकानां लुण्ठनं कृतवान्। ततः यत् धनं प्राप्तं तत् निर्धनेभ्यः दत्तवान्। अहं कदापि कस्माच्चित् अपि निर्धनात् किमपि न स्वीकृतवान्। कस्याश्चित् अपि महिलायाः अपमाननं न कृतवान्। यदा आत्मरक्षणक्षणः आगतः तदा अपि कस्यचित् अपि प्राणानाम् अपहरणं न कृतवान्" इति।

एतानि वचनानि विना भीतिम् उक्तवान् आसीत् रामसिंहः। तस्य मुखस्य दर्शनात्



ज्ञायते स्म यत् सः सत्यम् एव वदन् अस्ति इति। चोरस्य नीतिमार्गानुसरणं दृष्ट्वा राजा सन्तुष्टः। किन्तु लुण्ठनं यत् कृतं तत् तु अनुचितम् एव खलु? तदर्थं सः दण्डनीयः आसीत् एव। कीदृशं दण्डनं विधातव्यम् इति चिन्तयन् आसीत् राजा। तावता मन्त्री राज्ञः समीपम् आगत्य मन्दस्वरेण– "प्रभो, मया समग्रराजधान्याम् अटनं कृत्वा आगतम्। अर्धं राज्यं दीयते इति उच्यते चेदपि भिक्षुकः अपि यौवनं दातुं सिद्धः न भवति। एतस्य अपराधिनः दण्डनात् अस्माकं वैयक्तिकः कोऽपि लाभः तु नास्ति। अतः भवतः अनुज्ञा अस्ति चेत् अहम् एकम् उपायं करिष्यामि" इति निवेदितवान्।

यौवनप्राप्तीच्छया राजा अङ्गीकारपूर्वकं शिरः चालितवान्। तदा मन्त्री लुण्ठाकस्य रामसिंहस्य समीपं गत्वा– "रामसिंह! भवता यत् लुण्ठनं कृतं तस्य निमित्तं शूलारोपणदण्डः विधातव्यः। किन्तु यदि भवान् ...." इति मन्त्री यावत् उक्तवान् तदा लुण्ठाकः रामसिंहः मन्दहासपूर्वकम् पृष्टवान्– "यदि भवान् राज्ञे यौवनं दातुम् अङ्गीकारं सूचयेत् तर्हि शूलारोपणदण्डात् मुक्तिः स्यात्, अर्धं राज्यं चापि प्राप्येत– इति खलु भवान् मां वक्तुम् उद्युक्तः?" इति।

चरोस्य कुशाग्रमतित्वं दृष्ट्वा आश्चर्यम् अनुभवन् मन्त्री उक्तवान्– "मम आशयः झटिति अवगतः भवता। तीक्ष्णमतिः भवान्। मम प्रस्तावः अनुमतः खलु भवता?" इति।

तदा लुण्ठाकः रामसिंहः उच्चैः हसित्वा





उक्तवान्– "मन्त्रिवर्य! वस्तुतः तु महाराजेन यदा वार्ता प्रसारिता तदा अहं निश्चितवान् आसं यत् मदीयं यौवनं महाराजाय दातव्यम् इति। किन्तु ये कष्टे सन्ति तेषाम् उपयोगं ये स्वार्थनिमित्तं कुर्वन्ति ते अधमाधमाः इति उच्यन्ते। महाराजे अहं तादृशीं प्रवृत्तिम् अत्र इदानीं पश्यामि। यदि महाराजः मयि क्षमां प्रदर्शितवान् स्यात् तर्हि अहं महाराजस्य औदार्यं कृतज्ञतापूर्वकम् आजीवनम् अस्मरिष्यम्। यदि वा सः न्यायनियमस्य अनुगुणं योग्येन दण्डेन मां दण्डितवान् स्यात् तर्हि अपि अहं महाराजस्य न्यायप्रियतां स्मरन् गर्वम् अन्वभविष्यम्। किन्तु इदानीं तदुभयविरुद्धं व्यवहारं पश्यामि" इति।

चोरस्य कठोरवचनानि श्रुत्वा क्रुद्धः राजा– "अये, स्वयम् अपराधं कृत्वा, राज्ञः व्यवहारम् अपि विमृशन्तं भवन्तम् अहं शूलम् आरोपयितुं शक्नोमि इति स्मरति खलु भवान्?" इति पृष्टवान्।

तदा रामसिंहः अविचलः सन् एव पुनः उक्तवान्– "प्रभो, शूलारोपणम् एव न्याय्यम् इति यदि भवान् भावयेत् तर्हि तथैव करोतु। किन्तु एतत् तु स्मरतु यत् भवता दीयमानात् दण्डात् अहं कदापि भीतः न भविष्यामि इति, मन्त्रिणः प्रस्तावं सर्वथा न अङ्गीकरिष्यामि इति च" इति।

चोरस्य रामसिंहस्य वचनं श्रुत्वा राजा क्षणकालं स्तब्धः। अपमानवशात् तस्य मुखम् आरक्तं जातम्। किञ्चित्कालं सः सिंहासने मौनं उपविष्टवान् आसीत्। क्रमशः तस्य उद्वेगः शान्तः। सः शान्तचित्तः सन् सिंहासनात् अवतीर्य महत्या प्रीत्या रामसिंहम् आलिङ्ग्य– "रामसिंह! मम हृदयस्थम् अन्धकारं दूरीकृत्य भवान् मयि ज्ञानम् उत्पादितवान्। विवेकी ज्ञानी भवान् कश्चन महर्षिः एव। मम जीवनस्य अन्तिमकाले वा भवतः मेलनं जातं यत् तत् पूर्वजन्मनः पुण्यस्य फलम् इति अहं भावयामि। 'मम उत्तराधिकारित्वेन भवान् सिंहासने उपवेशनीयः' इति अहं निश्चितवान् अस्मि। भवतः पट्टाभिषेकस्य अनन्तरम् अहं संन्यासं ग्रहीष्यामि" इति।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! वार्धक्ये राज्ञः मतिः भ्रष्टा जाता इति खलु भासते? यः चौर्यनिमित्तं गृहीतः तस्य प्रशंसां कृत्वा 'भवान् महर्षिः' इति किमर्थम् उक्तवान् महाराजः? चोरं सिंहासने उपवेशितवान् इति तु तस्य महामूर्खतां खलु द्योतयति? अन्यत् आश्चर्यं नाम राजा स्वयं संन्यासं ग्रहीतुं निश्चितवान्। किमर्थं तेन तथा निश्चितम्? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "राज्ञः वसन्तवर्मणः आन्तर्यं परिशीलितं चेत् ज्ञायते यत् सः सुसंस्कृतः, विवेकी, गुणग्राही च इति। किन्तु महताम् अपि मनः कदाचित् मलिनं भवितुम् अर्हति एव खलु? वसन्तवर्मणः विषये अपि एवम् एव जातम्। वार्धक्ये अपि देशस्य उत्तराधिकारी पुत्रः नास्ति इति राज्ञः मनः खिन्नम् आसीत्। खेदवशात् यौवनप्राप्त्यर्थं सः उद्युक्तः अभवत्। मनसः मालिन्यस्य कारणतः आत्मना क्रियमाणस्य कार्यस्य अनौचित्यम् अपि न लक्षितं तेन। किन्तु प्राणापायम् अपि अविगणय्य कठोरां वस्तुस्थितिं सधैर्यं वदतः रामसिंहस्य वचनस्य श्रवणतः राज्ञा सत्यदर्शनं प्राप्तम्। साहसेन, धैर्येण, सुसंस्कारेण, त्यागगुणेन, अलोभित्वेन च युक्तः रामसिंहः राज्ञा महर्षित्वेन परिगणितः चेत् तत्र किम् अनौचित्यम्? सुलभलभ्यम् अर्धराज्यं परित्यज्य राज्ञः व्यवहारस्य अनौचित्यं राजसभायां वदन् रामसिंहः धीरः। एतादृशाः एव राज्यं सम्यक् पालयितुम् अर्हन्ति। अतः तं सिंहासने उपवेशयितुं सङ्कल्पं कृतवान् राजा। उत्तराधिकारिणे कर्तव्यभारं समर्प्य वार्धक्ये वानप्रस्थाश्रमः आश्रयणीयः इति परम्परागतः नियमः। अतः जीवनस्य सार्थक्यं प्राप्तुं, मरणं शान्तेन मनसा स्वागतीकर्तुं च सः संन्यासं गृहीतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# वास्तविकस्य हितस्य सिद्धिः

नन्दनपुरनामके ग्रामे उभौ श्रेष्ठिनौ आस्ताम्। तयोः अन्यतरः कनिष्ठः श्रेष्ठी निर्धनेभ्यः ऋणरूपेण धनं यच्छन् अल्पे एव काले महाधनिकः सञ्जातः। प्रभूतं धनं सम्पाद्य सः प्रासादसदृशं भवनं निर्मितवान्। एतत् दृष्टवतः ज्येष्ठश्रेष्ठिनः मनसि असूया उत्पन्ना। सः ज्ञातवान् यत् कनिष्ठश्रेष्ठी प्रतिमासं ३०% वृद्धिम् अपि स्वीकुर्वन् निर्धनान् वञ्चयन् अस्ति इति।

'एषः कनिष्ठश्रेष्ठी मम प्रतिस्पर्धी अस्ति। अधिकवृद्धिस्वीकरणेन जनान् पीडयन् अस्ति। एषः न निगृहीतः चेत् अहं सुखनिद्रां न प्राप्नुयाम् एव' इति आलोच्य ज्येष्ठश्रेष्ठी ग्रामप्रमुखस्य समीपं गत्वा निवेदितवान्– "कनिष्ठश्रेष्ठी अत्यधिकवृद्धिं निर्धनेभ्यः सङ्गृह्णन् जनान् पीडयन् अस्ति। तस्य एषः दुर्व्यवहारः निग्रहणीयः" इति। ग्रामप्रमुखः कनिष्ठश्रेष्ठितः तदा तदा उपायनं प्राप्नोति स्म। अतः ज्येष्ठश्रेष्ठिना उक्तं सर्वं श्रुत्वा अपि सः मन्दहासं प्रकट्य मौनम् आश्रितवान्, किमपि न कृतवान् एव।

एतेन खिन्नः ज्येष्ठश्रेष्ठी साक्षात् महाराजस्य समीपं गतवान्। कनिष्ठश्रेष्ठिनः धनपिपासां, ग्रामप्रमुखस्य पक्षपातपूर्णव्यवहारं च महाराजं निवेदितवान् सः। सर्वं श्रुत्वा राजा उक्तवान्– "एवं वा? तर्हि भवतः ग्रामे विद्यालयस्य आरम्भं कारयिष्यामि। योग्यं समर्थं प्रामाणिकम् अध्यापकं तत्र प्रेषयिष्यामि च" इति।

तदा ज्येष्ठश्रेष्ठी आश्चर्येण पृष्टवान्– "प्रभो, अहं तु विद्यालयनिर्माणं न प्रार्थितवान्। अत्याशाग्रस्तः कनिष्ठश्रेष्ठी, अन्यायसमर्थकः ग्रामप्रमुखः च निग्रहणीयौ इति निवेदितवान् अहम्। भवान् तु 'विद्यालयनिर्माणं करोमि' इति वदन् अस्ति। किमर्थम् एवम्?" इति।

तदा राजा हसन् उक्तवान्– "भवतः ग्रामस्य जनाः अशिक्षिताः इत्यतः कनिष्ठश्रेष्ठिनः वञ्चनायाः ते पात्रं जाताः। यदि अहं कनिष्ठश्रेष्ठिनं निगृह्य अन्यत्र प्रेषयेयं तर्हि अन्यः कश्चित् तादृशः आगत्य ग्रामीणान् वञ्चयेत् एव। अतः यावत् ग्रामीणाः अक्षरज्ञाः न भवन्ति, यावत् ते व्यवहारकुशलाः न भवन्ति, यावच्च ते वञ्चकानां वञ्चनां ज्ञातुं न शक्नुवन्ति तावत् तेषाम् उन्नतिः न भवति। अतः एव मया चिन्तितं यत् भवतः ग्रामे योग्यः विद्यालयः आवश्यकः इति। मया यत् क्रियते तेनैव ग्रामीणानां वास्तविकं हितं सिद्ध्यति, न तु तात्कालिकेन केनचित् उपायेन" इति।



# चन्दमामानुबन्धः-५१




अस्मद्देशीया पशुपक्षिसम्पत्-

## रात्रौ कीचूकुर्वन्तः बाब्लर्पक्षिणः

**प्रा**यः सर्वे पक्षिणः रात्रौ निद्रां कुर्वन्ति। किन्तु 'बाब्लर्'नामकः पक्षी तु रात्रौ कीचूकुर्वन् उच्चध्वनिम् उत्पादयति। शत्रुपीडां निवारयितुं सः तथा करोति इति जनाः वदन्ति। पक्षिजातिषु एव एतज्जातीयस्य ध्वनिः अत्युच्चः।

एते प्रायः सदापि समूहरूपेण एव निवसन्ति। आहारान्वेषणार्थं गमनम् अपि समूहरूपेण एव। एकस्मिन् एव प्रदेशे अण्डानि प्रसूय सम्भूय एव शावकान् उत्पादयन्ति। शावकानां पालनम् अपि सम्भूय एव कुर्वन्ति। एकस्य पक्षिणः पक्षयोः स्वच्छताम् अपरः स्वचञ्च्वा करोति। यदि एकः बाब्लर्पक्षी पञ्जरे बद्ध्यते तर्हि पञ्जरं परितः बहवः बाब्लर्पक्षिणः आगत्य तिष्ठन्ति। पञ्जरस्थं विमोचयितुम् इच्छन्तः ते तत्र आगताः न। पञ्जरस्थेन सह वासं कर्तुं स्वयमपि पञ्जरं प्रवेष्टुम् इच्छन्तः ते तत्र आगताः भवन्ति। प्रायः पञ्च षड् वा बाब्लर्पक्षिणः एकस्मिन् गणे भवन्ति।

बाब्लर्पक्षिणः दैर्घ्यं प्रायः १० अङ्गुल(२५ सें.मी.) मितं भवेत्। धूम्रवर्णस्य एतस्य पक्षिणः अधोभागः पीतच्छायायुक्तः भवति। एतस्य नेत्रे पीतवर्णेन श्वेतवर्णेन च मिश्रिते भवतः। चञ्चूः पादौ च पलाण्डुवर्णेन युक्ताः।

उन्नते आकाशे एतेषां डयनं विरलम्। लघुवृक्षाणां शाखासु एते नीडं रचयन्ति। उत्तरभारतीयानां बाब्लर्पक्षिणाम् आकारस्य अपेक्षया दक्षिणभारतीयानां पक्षिणाम् आकारः स्थूलः। एतेषाम् उपस्थित्या अरण्यं नूतनकान्त्या शोभते।



# आधुनिकं भारतीयसाहित्यम्

विशिष्टं कथावस्तु विना अपि कश्चन कथाग्रन्थः रचयितुं किं शक्येत? कुतो न? सुप्रसिद्धः मलयालभाषालेखकः वैक्कं महम्मद् बशीर्वर्येण रचितः 'पातुम्मायुडे आडु'ग्रन्थः पठितः चेत् भवन्तः अवश्यम् अङ्गीकरिष्यन्ति यत् विशेषकथावस्तु विना अपि कथाग्रन्थस्य रचना शक्या इति।

कृतिकारः कथाग्रन्थस्य प्रमुखपात्रं स्वयं सन् कथां निरूपयति। कानिचन वर्षाणि यावत्

## वैक्कं महम्मद् बशीर्कृतिः– 'पातुम्मायुडे आडु'



विभिन्नस्थानेषु निवासं कृत्वा स्वग्रामे एव शिष्टम् आयुष्यं यापनीयम् इति निश्चित्य स्वग्रामं प्रत्यागच्छति लेखकः। एतावता एव सः बहून् ग्रन्थान् लिखित्वा प्रसिद्धिं प्राप्तवान् आसीत्।

तदीयं गृहं लघु। गृहे सदस्याः बहवः। तदीयाः पत्नीपुत्राः, माता, भ्रातरौ, तयोः पत्नीपुत्रादयः, भगिनी, तस्याः पतिः, विवाहवयस्कः भ्राता– इत्येते सर्वे गृहे निवसन्ति। एतदतिरिच्य मूषकाः, मार्जाराः, कुक्कुटाः च सदा कोलाहलं कुर्वन्तः, कोलाहलं जनयन्तः च एतस्मिन् एव गृहे सुखेन निवसन्ति। एतावदेव न, काचन अजा अपि समग्रे गृहे स्वेच्छया सञ्चरन्ती भवति।

कदाचित् सा अजा लेखकस्य मञ्चं निर्भयम् आरुह्य तेन लिखितं पुस्तकद्वयं सन्तोषेण खादति। एतत् दृष्ट्वा लेखकः आश्चर्यम् अनुभवन् अपि अजायाः प्रेषणे प्रयत्नं न करोति। लेखकस्य पुस्तकयोः खादनेन अपि अजायाः बुभुक्षा शान्ता न भवति। यदा सा शय्यायाः उपरि स्थितम् आच्छादकम् अपि खादितुम् उद्युक्ता भवति तदा लेखकः मौनं स्थातुम् अशक्नुवन् कोपेन तां ततः प्रेषयति।



एतस्मिन् कथाग्रन्थे आदितः आन्तम् एतस्याः अजायाः उल्लेखः कृतः दृश्यते। सा च अजा तस्मिन् एव ग्रामे निवसन्त्याः लेखकस्य अनुजायाः पातुम्मायाः एव। कदाचित् सा अजा अतिविचित्रां परिस्थितिं सृजति। काचित् घटना एवम् अस्ति– एषा अजा घटे कथमपि स्वमुखं प्रवेशयति। घटतः मुखं बहिः आनेतुं न शक्नोति। इतः परं घटभञ्जनादिकं यत् करणीयं तत् तु गृहसदस्यानां कार्यम् इति चिन्तयन्ती इव मौनं शयनं करोति सा।

प्रशान्ते परिसरे स्वकीयं ग्रन्थरचनाकार्यम् अनुवर्तनीयम् इति उद्देशेन लेखकः स्वग्रामम् आगतः आसीत्। किन्तु गृहे शान्तिः सर्वथा दुर्लभा अस्ति। माता, भगिनी, मित्रबान्धवाः च लेखकतः आर्थिकसाहाय्यम् अपेक्षन्ते। किन्तु आत्मना कृता धनसाहाय्यप्रार्थना अन्येन न ज्ञायेत इति चिन्तयन्तः ते जागरूकतया भवन्ति।

पातुम्मायाः एका आशा आसीत् यत् मम अजा यदा प्रसूते तदा प्रभूतं क्षीरं ददाति, क्षीरस्य विक्रयणेन अहं धनसञ्चयं करिष्यामि इति।

अल्पे एव काले अजा श्वेतां सुन्दरीम् अजां प्रसूते। किन्तु पातुम्मायाः बान्धवाः अजायाः क्षीरं चौर्येण नयन्ति स्म। एवं चौर्येण प्राप्तेन क्षीरेण चायपानीयं निर्माय सर्वे सन्तोषेण पिबन्ति स्म।

एषः लघुकथाग्रन्थः लेखकस्य बाल्यजीवनं, बन्धु–मित्राणां विचित्रं व्यवहारं च परिचाययति। तदीयः कश्चन बन्धुः सर्वदा वदन् भवति यत् यदि मम आवश्यकताः न पूर्यन्ते तर्हि अहं सेनां प्रविशामि इति। कदाचित् स्थानीय-विद्यालयस्य विद्यार्थिन्यः लेखकस्य दिशिं निर्निमेषदृष्टिं प्रसारयन्ति। 'मम सौन्दर्येण आकृष्टाः एताः माम् एव पश्यन्त्यः सन्ति' इति साभिमानं चिन्तयति लेखकः। किन्तु अल्पे एव काले यदा लेखकः जानाति यत् मम पृष्ठतः स्थितं फलैः पूर्ण-वृक्षम् एताः पश्यन्ति, न तु माम् इति तदा तदीयः अभिमानः समूलं नश्यति।

मृदुहास्येन युक्तः एषः कथाग्रन्थः केरलीयं सामान्यमुसल्मानकुटुम्बजीवनं परिचाययति। निर्धनानां जनानाम् आशाः, विश्वासान्, व्यवहारं, सुखदुःखानि च सुचारुरूपेण निरूपयति एषः ग्रन्थः।

आधुनिकमलयाळकथासाहित्यस्य मार्गदर्शी अस्ति वैक्कं महम्मद् बषीर्वर्यः। एतेन १९१० तमे वर्षे जन्म प्राप्तम्।

# भवन्तः जानन्ति वा?

१. देहली अस्माकं देशस्य राजधानी कदा जाता? ततः पूर्वं किं नगरं देशस्य राजधानी आसीत्?
२. 'रोडीशिया'देशस्य नूतनं नाम किम्?
३. अतिप्राचीना क्रीडा का?
४. भारतराष्ट्रियकांग्रेस्संस्थायाः प्रथमा अध्यक्षा का आसीत्?
५. सर्वप्रथमं 'रोबाट्'यन्त्रस्य निर्माणं कदा जातम्?
६. 'जय हिन्द्' इत्येतत् घोषणावाक्यं केन सृष्टम्?
७. भारतस्य उपराष्ट्रपतिना निरुह्यमाणम् अपरं पदवीदायित्वं किम्?
८. चित्रोष्ट्राणां (झीब्रा) वैशिष्ट्यं किम्?
९. राजतरङ्गिणीग्रन्थे केषां राज्ञां चरित्रं निरूपितम् अस्ति?
१०. भारते मूल्याङ्कः (Postal Stamp) ऐदम्प्राथम्येन कदा व्यवहारे आनीतः?
११. कया चाकलेहसंस्थया कश्चन समग्रः ग्रामः निर्मितः आसीत्?
१२. इटलीदेशस्य राष्ट्रियं पुष्पं किम्?
१३. 'गीतगोविन्द'ग्रन्थस्य रचयिता कः?
१४. विश्वस्तरीयप्रमुखग्रन्थेषु अन्यतमः 'दास् केपिटल्' इत्येषः ग्रन्थः केन लिखितः?
१५. अमेरिकाध्यक्षस्य श्वेतभवन(वैट् हौस्)नामके वासभवने किमर्थं श्वेतः वर्णः लिप्तः आसीत्?

# उत्तराणि

१. १९११ तमे वर्षे। कलकत्ता।
२. जिम्बाब्वे इति।
३. पोलो। प्रथमे क्रिस्ताब्दे एव फारस्(इरान्) देशे एषा क्रीडा क्रीड्यते स्म।
४. डा. अनि बेसेण्ट्।
५. १९६२ तमे वर्षे अमेरिकादेशीयया युनिमेषन् संस्थया निर्मितम्।
६. नेताजी सुभाश्चन्द्र बोस्।
७. राज्यसभायाः सभापतिपदम्।
८. शरीरस्थाः कृष्णपट्टिकाः एकस्य इव अपरस्य कदापि न भवति।
९. काश्मीरराजानाम्।
१०. १८५२ तमे वर्षे कराचीनगरे। तदा कराची भारते आसीत्।।
११. केड्बरीसंस्थया-बोर्नविल्लेनामकः ग्रामः।
१२. कुमुदिनीनामकम्।
१३. जयदेवः।
१४. कार्ल्मार्क्सवर्येण।
१५. अग्निस्पर्शात् जातानां कृष्णाङ्कानां निवारणार्थं गोपनार्थं वा।



# योग्यः जामाता

एकतापुरनामके ग्रामे शम्भुनाथः नाम कश्चन धनिकः आसीत्। तस्य एका एव पुत्री। तस्याः नाम मन्दाकिनी इति।

मन्दाकिन्याः सौन्दर्यम् अपूर्वम् आसीत्। सा धनिककुले जाता अपि इत्यतः बहवः धनिककुलोत्पन्नाः तरुणाः तां परिणेतुं सिद्धाः जाताः। किन्तु मन्दाकिनी तेषु कमपि परिणेतुं न इच्छति स्म। सा रामचन्द्रं परिणेतुम् इच्छति स्म।

रामचन्द्रः सुन्दरः सरलः च आसीत्। प्रामाणिकश्चापि आसीत्। असत्यकथनं मरणसमानम् इति भावयति स्म सः। तस्य मातापितरौ बान्धवाः वा न आसन्। अतः सः शम्भुनाथस्य गृहे एव वसन् शम्भुनाथस्य सर्वेषु कार्येषु साहाय्यं करोति स्म।

कदाचित् मन्दाकिनी पितरम् उक्तवती यत् अहं रामचन्द्रे अनुरक्ता अस्मि इति। एतत् श्रुत्वा शम्भुनाथः आश्चर्यचकितः। सः पुत्रीं सम्यक् तर्जितवान्।

'यः मम गृहे उद्योगं कुर्वन् अस्ति तम् अहं कदापि जामातरं भावयितुं न शक्नोमि। यदि सः मम जामाता भवेत् तर्हि कुलस्य एव महत् अपमाननम्' इति आलोच्य शम्भुनाथः रामचन्द्रे मिथ्यादोषम् आरोप्य तम् उद्योगात् च्युतं कृतवान्।

एतया घटनया रामचन्द्रः नितरां खिन्नः। सः ग्रामं परित्यज्य कुत्रापि गतवान्। एषा वार्ता यदा ज्ञाता तदा मन्दाकिनी शोकसागरे निमग्ना। सा मातापितरौ दृढस्वरेण उक्तवती यत् यदि अहं परिणयेयं तर्हि रामचन्द्रम् एव, अन्यथा अहम् अविवाहिता एव तिष्ठामि इति। माता पुत्र्याः आशयं समर्थितवती। मन्दाकिनी अन्नपानादिकम् अपि परित्यज्य अश्रूणि स्रावयन्ती उपविष्टवती। तदा

"सुभद्रा"

अनन्योपायः शम्भुनाथः रामचन्द्रस्य अन्वेषणार्थं प्रयत्नं कृतवान्। किन्तु रामचन्द्रः कुत्रापि न दृष्टः।

एवम् एव वर्षद्वयम् अतीतम्। योग्यस्य साहाय्यकस्य अभावतः शम्भुनाथः पदे पदे कष्टम् अनुभवति। पुत्री अन्यं कमपि परिणेतुं न इच्छति इत्यतः पुत्र्याः विवाहस्य चिन्ता शम्भुनाथं सर्वदा बाधते। एवं कार्यभारस्य चिन्तायाः च कारणतः शम्भुनाथः अस्वस्थः जातः। शय्याम् आश्रितवान् च।

पत्युः अस्वास्थ्यं दृष्ट्वा खिन्ना शम्भुनाथपत्नी पुत्रीं विविधैः वचनैः बोधयित्वा कथमपि विवाहार्थं पुत्र्याः अङ्गीकारं प्राप्तवती। एतेन शम्भुनाथः नितरां सन्तुष्टः। तस्य अस्वास्थ्यम् अपगतम्। सः मन्दाकिन्याः निमित्तं वरस्य अन्वेषणार्थम् उद्युक्तः अभवत्।

दूरस्थे ग्रामे कोट्यधीशः धर्मराजः निवसति स्म। धर्मराजः स्वस्य एकमात्रपुत्रस्य विवाहार्थं योग्यायाः वध्वाः अन्वेषणं कुर्वन् आसीत्। एषा वार्ता शम्भुनाथेन ज्ञाता। सः ग्रामस्य कञ्चित् ज्येष्ठम् आत्मना सह नीत्वा धर्मराजस्य ग्रामं गतवान्। यदा एषः धर्मराजस्य गृहं प्राप्तवान् तदा तदीयः पुत्रः गृहे न आसीत्।

धर्मराजः शम्भुनाथं महता आदरेण स्वागतीकृतवान्। "अहम् इदानीम् एव पुत्रम् आह्वयामि। भवान् श्रुतवान् स्यात् यत् मम कृषिः, वाणिज्यवृत्तिः चापि अस्ति इति। एषु दिनेषु मम पुत्रः वाणिज्ये एव निरतः भवति"



इति उक्त्वा धर्मराजः नूतनं साहाय्यकं तत्र आहूतवान्।

धर्मराजस्य नूतनः साहाय्यकः आगतः। सः साहाय्यकः न अन्यः अपि तु रामचन्द्रः एव! तं तत्र दृष्ट्वा शम्भुनाथः नितराम् आश्चर्यचकितः। रामचन्द्रः तु महत्या प्रीत्या शम्भुनाथेन सह वार्तालापं कृतवान्। गृहसदस्यस्य एकैकस्यापि नाम उक्त्वा योगक्षेमं विचारितवान् सः।

एतत् दृष्ट्वा धर्मराजः शम्भुनाथम् उक्तवान्– "सद्यः एव एषः मया उद्योगे नियोजितः। इतः पूर्वम् एषः भवतः गृहे उद्योगे आसीत् इति भाति खलु?" इति। अनन्तरं रामचन्द्रं पश्यन् उक्तवान् सः– "शीघ्रं गत्वा मम पुत्रम् आनयतु" इति।

तदा रामचन्द्रः मन्दस्वरेण उक्तवान्– "सः इदानीं न आगच्छति" इति।

"अवश्यम् आगच्छति सः। वाणिज्यव्यवहारः अनन्तरं द्रष्टव्यः इति तं वदतु। कन्यां दातुम् इच्छन् कन्यापिता गृहम् आगतः अस्ति इति तं सूचयतु" इति उक्त्वा नेत्रसङ्केतेन किमपि सूचितवान् धर्मराजः।

किन्तु रामचन्द्रः तं नेत्रसङ्केतम् उपेक्ष्य उक्तवान्– "सः इदानीं नीलवेण्याः गृहे स्यात्। अतः सः आगन्तुम् इच्छति चेदपि नीलवेणी तं न प्रेषयेत्" इति।

"सा नीलवेणी का?" इति आश्चर्येण पृष्टवान् शम्भुनाथः।

धर्मराजः किमपि उक्त्वा विषयान्तरम् उपस्थापयितुं यदा उद्युक्तः तदा रामचन्द्रः



उक्तवान्– "सा नीलवेणी मञ्जुवाण्याः पुत्री। केभ्यश्चित् दिनेभ्यः पूर्वम् एतस्य पुत्रः सुरां पीत्वा यदा मार्गे पतितः आसीत् तदा नीलवेणी मञ्जुवाणी च तं गृहं नीत्वा सेवां कृतवत्यौ। तदारभ्य एषा स्थितिः। मञ्जुवाणी सर्वत्र वदन्ती अस्ति यत् एतस्य पुत्रः मम भावी जामाता इति" इति।

एतेन शम्भुनाथः वस्तुस्थितिं ज्ञातवान्। किन्तु वस्तुस्थितिः प्रकटिता अभवत् इत्यतः क्रुद्धः धर्मराजः उग्रदृष्ट्या रामचन्द्रं दृष्टवान्। शम्भुनाथः विना वचनम् उत्थाय ग्रामवृद्धेन सह गृहात् बहिः आगतवान्।

धर्मराजः क्रोधेन रामचन्द्रं गले गृहीत्वा– "अये अविवेकिन्! भवन्तं कार्ये नियोजयता मया महती मूर्खता आचरिता। दावानलः भवान् आश्रयम् एव दहति। निर्गच्छतु इतः। अलं भवतः स्थित्या" इति उक्त्वा गृहात् निष्कासितवान्।

द्वारात् बहिः पतन्तं रामचन्द्रं प्रीत्या उत्थाप्य उक्तवान् शम्भुनाथः– "वत्स! आगच्छतु, मम गृहं गच्छाव तावत्" इति।

तदा गृहस्य देहल्यां स्थित्वा उक्तवान् धर्मराजः– "तस्य वचने मा विश्वसितु कृपया" इति।

एतत् श्रुत्वा शम्भुनाथः मन्दहासपूर्वकम् उक्तवान्– "एषः रामचन्द्रः कीदृशः इति मम गृहे सर्वे जानन्ति। मया तु विलम्बेन ज्ञातम्। अहं जानामि– एषः प्राणान् वा अर्पयेत्, किन्तु असत्यं न वदेत् इति। विना कारणम् एतं गृहात् अहं निष्कासितवान् यत् तदर्थं पश्चात्तापम् अनुभवन् आसम्। किन्तु सौभाग्यवशातः एषः दृष्टः। मम पुत्र्याः भाविजीवने भविष्यमाणां हानिम् एषः निवारितवान् अपि। अतः अहम् इदानीम् एतं न कर्मकरत्वेन, अपि तु जामातृत्वेन मम गृहं नयन् अस्मि" इति।

शम्भुनाथस्य पत्नी पुत्री च गृहम् आगतं रामचन्द्रं दृष्ट्वा नितरां सन्तुष्टे। अनन्तरं सुमुहूर्ते रामचन्द्र-मन्दाकिन्योः विवाहः सवैभवं सम्पन्नः।






रशियादेशे पूर्वं काचित् वृद्धा आसीत्। तस्याः पुत्रद्वयम् आसीत्। तयोः अन्यतरः मृतः अभवत्। अपरः दूरदेशं प्रति गतवान् आसीत्। अथ कदाचित् कश्चन सैनिकः तस्याः गृहम् आगतवान्, विनयेन उक्तवान् च– "अम्ब! दूरात् आगतः अस्मि। अद्य रात्रौ अत्र स्थातुं शक्नुयां वा? प्रातः एव इतः निर्गमिष्यामि" इति।

"अस्तु तावत्। कस्मात् प्रदेशात् आगच्छन् अस्ति भवान्?" इति पृष्टवती वृद्धा।

"परलोकात् आगच्छन् अस्मि अम्ब!" इति उक्तवान् सैनिकः।

"एवं वा? मम एकः पुत्रः दिवङ्गतः अस्ति। सः तत्र भवता कुत्रापि दृष्टः वा?" इति मौग्ध्येन पृष्टवती वृद्धा।

"कुतो न? आवां द्वौ अपि सहैव वसावः खलु?" इति उक्तवान् सैनिकः।

"एवं वा?" इति आश्चर्यं प्रकटितवती वृद्धा।

"भवत्याः पुत्रः तत्र कारण्डवानां पालनं कुर्वन् अस्ति अम्ब!" इति उक्तवान् सैनिकः।

"अहो दौर्भाग्यम्! न जाने, तत्र तेन कियत् कष्टम् अनुभूयते इति!" इति दीर्घनिःश्वासपूर्वकम् उक्तवती वृद्धा।

"आम् अम्ब! महता कष्टेन दिनानि यापयन् अस्ति सः। यदा कारण्डवाः कण्टकमये स्थले गच्छन्ति तदा भवत्याः पुत्रः तान् अनुसृत्य धावन् महत् कष्टम् अनुभवति" इति उक्तवान् सैनिकः।

"एवं तर्हि तदीयानि वस्त्राणि सर्वाणि छिन्नानि स्युः" इति सखेदम् उक्तवती वृद्धा।

"अथ किम्? तदीयानि सर्वाणि वस्त्राणि छिन्नानि। एकम् अपि समीचीनं वस्त्रं नास्ति तत्समीपे" इति उक्तवान् सैनिकः।

"वत्स! पश्यतु मम पुत्रस्य दुर्गतिम्! मम

"रशियादेशीया जानपदकथा"



गृहे चत्वारिंशद्हस्तमितं वस्त्रं, किञ्चित् धनं च अस्ति। तदुभयं नीत्वा मत्पुत्राय दातुं शक्नुयात् वा भवान्?" इति पृष्टवती वृद्धा।

"अम्ब! भवत्या यदा प्रार्थ्यते तदा कथं वा निराकुर्याम्? अवश्यं नीत्वा ददामि। ददातु तावत्" इति उक्तवान् सैनिकः।

तस्यां रात्रौ सैनिकः तत्रैव शयनं कृतवान्। अनन्तरदिने वृद्धया दत्तं वस्त्रं धनं च स्वीकृत्य सन्तोषेण ततः निर्गतवान् सः।

एतदनन्तरं कानिचन दिनानि अतीतानि। वृद्धायाः अपरः पुत्रः दूरदेशतः प्रत्यागतः। तम् उक्तवती वृद्धा– "वत्स! भवतः अनुपस्थितौ परलोकतः कश्चित् आगतः आसीत्। दिवं गतः भवदग्रजः तत्र महता कष्टेन जीवति इति श्रूयते। अतः एतद्द्वारा भवदग्रजाय वस्त्रं धनं च अहं प्रेषितवती" इति।

"अम्ब! किम् एतत् कृतं भवत्या? भवत्याः मौग्ध्यं दृष्ट्वा कश्चित् भवतीं वञ्चितवान्। अस्तु तावत्। तम् अन्विष्य अहम् अपि वञ्चयिष्यामि" इति मातरम् उक्त्वा आगतस्य मुखलक्षणादिकं मातुः मुखात् ज्ञातवान् सः पुत्रः।

समीपग्रामेषु एतादृशः जनः कोऽपि निवसति वा? इति जनान् पृष्टवान् सः पुत्रः। सौभाग्यवशात् तेन ज्ञातं यत् सः वञ्चकः अरण्यात् अनन्तरं स्थिते कस्मिंश्चित् ग्रामे निवसति इति। वृद्धापुत्रः तं ग्रामम् अन्विष्य गतवान्। तत् गृहम् अपि अन्विष्टं तेन। तस्य गृहस्य पुरतः काचित् सूकरी आहारान्वेषणं कुर्वती इतस्ततः सञ्चरन्ती आसीत्। वृद्धापुत्रः सूकर्याः समीपं गत्वा भक्त्या नमस्कुर्वन् तां किमपि वदन् इव अभिनीतवान्।

गृहस्य अट्टस्य पुरोभागे स्थित्वा गृहस्वामिनी एतत् पश्यन्ती आसीत्। सा सेविकाम् आहूय उक्तवती– "सः तरुणः सूकरीं किमर्थं तथा नमस्कुर्वन् अस्ति इति ज्ञात्वा आगच्छतु" इति।

सेविका वृद्धापुत्रस्य समीपम् आगत्य पृष्टवती– "भोः, अस्माकं सूकर्याः पुरतः एवं किमर्थं नमस्कारं करोति भवान्?" इति।

तदा वृद्धापुत्रः उक्तवान्– "आर्ये, एषा सूकरी मम पत्न्याः दूरबन्धुः। श्वः मम पुत्र्याः विवाहः प्रचलिष्यति। वधूपक्षस्य नेतृत्वं एतया सूकर्या एव वोढव्यम् इति मम पत्न्याः इच्छा। अतः सपरिवाराम् एताम् आमन्त्रयितुम् आगतः अहम्। एतां वार्तां स्वामिनीम् उक्त्वा एतां नेतुम् अनुमतिं दापयतु कृपया" इति।

सेविकायाः मुखतः सर्वं श्रुत्वा गृहस्वामिनी उक्तवती– "विवाहार्थं सूकरीं नेतुम् आगतः वा एषः? अहो मूर्खता एतस्य! सूकर्या सह गच्छन्तम् एतं दृष्ट्वा जनाः हसेयुः। एतं दृष्ट्वा जनाः हसन्ति चेत् अस्माकं का हानिः? अतः सूकरीं नयतु सः। वस्त्रादिभिः सूकरीं तत्पुत्रान् च अलङ्करोतु भवती" इति।

सेविका: सूकरीं तत्पुत्रान् च अलङ्कृतवती। अनन्तरं सूकरी तत्पुत्राः च अश्वशकटे उपवेशिताः। वृद्धापुत्रः अश्वं चोदयन् शकटं नीतवान्। अट्टस्य उपरि स्थित्वा एतत् दृश्यं दृष्ट्वा गृहस्वामिनी उदरोपपीडं हसितवती।

मृगयां समाप्य वञ्चकः यदा गृहं प्रत्यागतः तदा पत्नी हसन्ती उक्तवती– "अहो, भवान् किञ्चित्पूर्वं यदि अत्र स्यात् तर्हि अपूर्वं दृश्यं द्रष्टुम् अशक्ष्यत्। वयं सर्वे एतावत् हसितवत्यः यत् अस्माकम् उदरे वेदना उत्पन्ना। कश्चित् तरुणः अस्माकं सूकरीं स्वपत्न्याः बन्धुं भावयन् नमस्करोति स्म।



स्वपुत्र्याः विवाहः निश्चितः इति, विवाहदिने एतया सूकर्या एव वधूपक्षस्य नेतृत्वं निर्वोढव्यम् इति च वदन् सः सपरिवारां सूकरीं विवाहार्थं निमन्त्रितवान्। एतां सूकरीं प्रेषयतु इति विनयेन मां प्रार्थितवान् च" इति।

"तस्य प्रार्थनाम् अङ्गीकृत्य भवती सूकरीं तत्पुत्रान् च प्रेषितवती। एवं ननु?" इति क्रोधेन पृष्टवान् वञ्चकः।

"आम्। अमूल्यानि वस्त्राणि धारयित्वा अहं सूकरीं तत्पुत्रान् च अश्वशकटे उपवेश्य प्रेषितवती" इति उक्तवती पत्नी।

"मूर्खे! भवतीं वञ्चितवान् सः" इति क्रोधेन पत्नीम् उक्त्वा, तरुणः कस्यां दिशि गतवान् इति पृष्ट्वा ज्ञात्वा अश्वम् आरुह्य

तां दिशम् अनुसृतवान् वञ्चकः।

वृद्धापुत्रः दूरात् एव अश्वस्य खुरपुटध्वनिं श्रुतवान्। 'वञ्चकः एव आगच्छन् अस्ति' इति ज्ञात्वा शकटं गुल्मानां मध्ये स्थगयित्वा सः मार्गम् आगतवान्। मार्गपार्श्वे शिरस्त्रम् अधोमुखं स्थापयित्वा तत्पार्श्वे स्वयम् उपविष्टवान् च।

अश्वारूढः वञ्चकः आगत्य पृष्टवान्– "अये, शकटे सूकरीम् उपवेश्य गच्छन् कोऽपि दृष्टः वा भवता?" इति।

"आम्। किञ्चित्कालतः पूर्वं तादृशः दृष्टः मया। एतावता इतः सुदूरं गतवान् स्यात् सः" इति उक्तवान् वृद्धापुत्रः।

"तं ग्रहीतुं भवान् मम साहाय्यं कुर्यात् वा?" इति पृष्टवान् श्रान्तः वञ्चकः।

तदा वृद्धापुत्रः उक्तवान्– "इतः अन्तर्मार्गेण गत्वा तं ग्रहीतुं शक्येत। किन्तु मम समीपे अश्वः नास्ति। अन्यच्च इतः गन्तुम् अपि न शक्नोमि। यतः एतस्य शिरस्त्रस्य अधः स्थितस्य श्येनस्य रक्षणं मम कार्यम्। यदि श्येनः इतः च्युतः भवेत् तर्हि मम स्वामी मत्तः त्रिशतं रजतनाणकानि स्वीकुर्यात्" इति।

"मित्र! अलं चिन्तया। मम अश्वम् आरुह्य गत्वा तं दुष्टं गृह्णातु भवान्। श्येनस्य रक्षणम् अहं करोमि। अथवा एतानि त्रिशतं रजतनाणकानि स्वीकरोतु भवान्, येन श्येनः उड्डीय गतः चेदपि भवतः हानिः न स्यात्" इति उक्त्वा त्रिशतं रजतनाणकानि अश्वं च वृद्धापुत्राय दत्तवान् वञ्चकः।

वञ्चकेन दत्तं धनं स्वीकृत्य अश्वम् आरुह्य सूकरैः सहितम् अश्वशकटं चापि चोदयन् स्वगृहं गतवान् वृद्धापुत्रः। दीर्घकालं यावत् वृद्धापुत्रस्य प्रतीक्षां कृतवान् वञ्चकः। तथापि सः यदा न आगतः तदा वञ्चकः खेदेन शिरस्त्रम् उन्नीय दृष्टवान्। वस्तुतः तस्य अधः श्येनः कोऽपि न आसीत्। 'यथा मम पत्नी वञ्चिता अभवत् तथैव अहम् अपि वञ्चितः अभवम्' इति चिन्तयन् सः खेदेन मौनं गृहं प्रतिगतवान्।






हनूमान् शरवेगेन ततः निर्गत्य यत्र चन्द्रसेना स्थापिता तं प्रकोष्ठम् अन्विष्यन् गतवान्। सः अविलम्बेन अन्तःपुरं प्राप्तवान्। तच्च भवनं चन्द्रशिलाभिः निर्मितम् आसीत्। विविधैः शिल्पैः तत् अलङ्कृतम् आसीत् अपि। भवनभित्तिषु तत्र तत्र मणि-माणिक्यादयः योजिताः आसन्। अतः तद् भवनं घोरे अन्धकारे अपि सम्यक् प्रकाशते स्म।

भवनद्वारे रक्षकत्वेन कोऽपि राक्षसः न आसीत्। सर्वे कालिकामन्दिरे प्रचलतः उत्सवस्य निमित्तं गताः आसन्। किन्तु भवनद्वारे कश्चन घोरः राक्षससर्पः रक्तवर्णाभ्यां नेत्राभ्याम् इतस्ततः पश्यन् रक्षणकार्यं करोति स्म।

यदा हनूमान् तं राक्षससर्पं दृष्टवान् तदा एव तेन सर्पेण अपि हनूमान् दृष्टः। सः सर्पः झटिति फूत्कुर्वन् पुच्छम् उन्नीय अग्रे आगच्छत्। मानवस्य इव तस्यापि पादौ आस्ताम्। तस्य मुखात् अग्निज्वाला धूमः च निर्गच्छति स्म। सः हनूमतः गिलनार्थम् अग्रे आगच्छत्। तावता भवनस्य कस्माच्चित् प्रकोष्ठात् स्त्रीकण्ठतः निर्गतः आर्तस्वरः श्रुतः।

अनन्तरक्षणे एव हनूमान् सूक्ष्मरूपं प्राप्य राक्षससर्पस्य मुखं प्रविष्टवान्। उदरभागं प्राप्य शरीरं वर्धयन् सर्पस्य उदरं भित्त्वा बहिः आगतवान् च। सर्पः प्राणैः वियुक्तः सन् अपतत्।

हनूमान् भवनस्य अन्तः गतवान्। समग्रे



भवने अन्धकारः आसीत्। किन्तु यत्र यत्र मणयः माणिक्यादयः च आसन् तत्र अल्पा कान्तिः दृश्यते स्म। स्त्रियः आर्तनादः यस्याः दिक्तः श्रुतः तां दिशम् अनुसृतवान् हनूमान्। तावता पुनरपि स एव आर्तनादः श्रुतः, कशाताडनशब्दः अपि श्रुतः।

हनूमान् वेगेन धावन् तं प्रकोष्ठं प्राप्तवान्, यत्र चन्द्रसेना बद्धा आसीत्। प्रकोष्ठस्य द्वारम् अन्तर्भागतः कीलितम् आसीत्। अतः हनूमान् उपरि स्थितात् वातायनतः दृष्टिम् अन्तः प्रसारितवान्। प्रकोष्ठे कशाहस्ता तर्जनरता कण्टकिनी, दैन्येन पश्यन्ती चन्द्रसेना च दृष्टे।-

"अये, मायाविनि! भवती कं कालिकामन्दिरं प्रति प्रेषितवती? सत्यं वदतु, अन्यथा भवतीं परशुना छित्वा भवत्याः रक्तं पास्यामि। वञ्चिकां मायाविनीं भवतीम् एतं पाताललोकम् आनयतः महिरावणस्य बुद्धिः सर्वथा मलिना एव। तदस्तु, भवती तत्र कं प्रेषितवती? वदतु तावत्। अये वदतु रे" इति वदन्ती क्रुद्धा कण्टकिनी चन्द्रसेनां कण्ठे गृहीत्वा मारयितुं प्रयत्नं कृतवती।

हनूमान् झटिति स्वपुच्छं दीर्घीकृत्य प्रकोष्ठस्य अन्तः प्रेषितवान्। चन्द्रसेनां कण्ठे गृहीत्वा मारयितुं प्रयत्नं कुर्वतीं कण्टकिनीं स्वपुच्छेन कण्ठे गृहीतवान्, झटिति आकृष्टवान् च। तदा कण्टकिन्याः ग्रहणात् चन्द्रसेना मुक्ता अभवत्। ततः हनूमान् पुच्छेन ग्रहणं दृढीकुर्वन् कण्टकिनीं गतप्राणां कृतवान्। प्राणैः विरहितं कण्टकिन्याः शरीरम् अधः अपतत्।

हनूमान् अनन्तरम् एकेन एव मुष्टिप्रहारेण प्रकोष्ठस्य द्वारं भित्त्वा अन्तः गतवान्। भीत्या कम्पमानां चन्द्रसेनां विनयेन नमस्कृत्य स्वपरिचयम् उक्त्वा आगमनकारणं, प्रवृत्तं समग्रं च संक्षेपेण निवेदितवान्।

रामनामश्रवणतः एव चन्द्रसेनायाः दुःखं पूर्णतः अपगतम्। सा आनन्देन उक्तवती— "आञ्जनेय ! यत् प्रवृत्तं तत् सौभाग्याय एव अभवत्। रामदर्शनार्थम् अवकाशः प्राप्तः मया। महिरावणस्य प्राणरहस्यम् अहम् अवश्यं वदामि। किन्तु भवता

प्रत्युपकाररूपेण वचनं दातव्यं यत् महिरावणस्य संहारस्य अनन्तरं भवतीम् अहम् अवश्यं रामसमीपं नेष्यामि इति" इति।

एतत् सन्तोषेण अङ्गीकृतवान् हनूमान्। अनन्तरं चन्द्रसेना तत् स्थलं हनूमन्तं सूचितवती, यत्र महिरावणस्य प्राणाः निगूहिताः आसन्।

एतत् श्रुत्वा हनूमान् झटिति ततः बहिः आगत्य आकाशमार्गम् आश्रित्य सप्त समुद्रान् अतिक्रम्य ज्वालामुखपद्मसमीपं गतवान्। उग्राः ज्वालाः एव तस्य पद्मस्य दलानि आसन्। हनूमान् अग्निदेवं स्मरन् तत् पद्मं प्रविष्टवान्। ततः नालमार्गेण मकरबिलं प्रविष्टवान् च।



मकरबिले फूत्कुर्वन्तः घोराः सर्पाः आसन्। पिशाचाः अपि हूङ्कुर्वन्तः आसन्। हनूमान् उच्चैः गर्जनं कुर्वन् मुष्टिप्रहारादिभिः तान् इतस्ततः अपसार्य अग्रे गतवान्। तावता समग्रां गुहाम् आक्रम्य स्थितः कश्चन करालः घोरः राक्षसाकारः तस्य पुरतः आगतः। श्वेतश्मश्रुणा रक्तनेत्राभ्यां च युक्तः आसीत् स च आकारः। तस्य घोराकारस्य विकटाट्टहासेन सा गुहा व्याप्ता आसीत्।

"अये, अपसरतु। कः भवान्?" इति कठोरस्वरेण पृष्टवान् हनूमान्।

तदा सः घोराकारः पुनरपि हसित्वा अवदत्– "अहं वेतालः अस्मि। भूत-प्रेत-पिशाचानां नायकः अस्मि। भवान् कः? अत्र द्वावेव आगन्तुम् अर्हतः। एकः महिरावणः, अपरः शक्तिशाली कश्चित्। भवान् महिरावणः तु न। एवं तर्हि सः अपरः शक्तिशाली भवान् एव स्यात्" इति।

तदा हनूमान् उच्चैः हसित्वा अवदत्– "अये वेताल! धिक् भवन्तम्। स्वेच्छया श्मशाने येन भवता विहरणीयम् आसीत् सोऽयम् इदानीम् एवं बन्दी इव गुहायां निवसति खलु? अहो दुर्दशा भवतः! अपसरतु इतः। अन्यथा मम बाहुः भवन्तं मर्दयिष्यति" इति।

"पश्याम तावत् भवतः बाहुबलम्। यत् इच्छति तत् करोतु भवान्" इति उपहासपूर्वकम् अवदत् वेतालः।



तदा ताः ज्वालाः हनूमन्तम् अपि आक्रान्तवत्यः। हनूमान् झटिति प्रलय-मारुतसदृशेन निःश्वासेन ताः ज्वालाः निवारयितुं प्रयत्नं कृतवान्। किन्तु ज्वालाः न शान्ताः, प्रत्युत क्षणे क्षणे अवर्धन्त।

हनूमान् हस्तौ उन्नीय अग्निदेवं नमस्कुर्वन्– "हे अग्निदेव! अहं भवतः मित्रस्य वायोः पुत्रः अस्मि। मयि कृपां प्रदर्शयतु" इति प्रार्थितवान्।

अनन्तरक्षणे एव ज्वालाः शान्ताः। तावता पेटिकायाः उपरि स्थितायाः कान्तितः वचनानि निर्गतानि– "अये आञ्जनेय! एकं प्रधानम् अंशं वक्तुम् एव अहम् एवं घोररूपं धृत्वा आगतवान् आसम्। पेटिकायां स्थिताः पञ्च भ्रमराः भवता युगपत् मारणीयाः। तदर्थं भवता पञ्चमुखत्वं प्राप्तव्यम्। मुखमारुतेन तान् भ्रमरान् युगपत् मुखे नीत्वा चर्वणपूर्वकं मारणीयाः ते। स्मरतु एतत्" इति।

हनूमान् अग्निदेवं नमस्कृतवान्। अनन्तरं भ्रमरयुक्तां रत्नपेटिकाम् उन्नीय वायुवेगेन रामलक्ष्मणयोः समीपं गतवान् च। रामलक्ष्मणौ तु असङ्ख्यान् महिरावणान् निरन्तरं मारयन्तौ आस्ताम्।

हनूमान् उच्चैः सिंहनादं कुर्वन् महिरावणस्य पुरतः अवतीर्य रत्नपेटिकां प्रदर्शयन् तम् उक्तवान्– "अये पातालल‌ङ्केश्वर! भवतः प्राणाः यत्र

तदा हनूमान् दृढया मुष्ट्या वेतालं बलात् प्रहृतवान्। वेतालः भूमौ अपतत्। अनन्तरक्षणे उत्थाय हनूमन्तं नमस्कृत्य– "आर्य, आञ्जनेयवर्य! अहं धन्योऽस्मि। अल्पस्य अकार्यस्य कारणतः अहं शापवशात् एतस्यां गुहायां बन्दी आसम्। 'हनूमतः स्पर्शात् भवतः शापविमुक्तिः' इति उक्तवान् आसीत् शिवः। अद्य अहं शापात् मुक्तः। जयतु हनूमान्" इति उक्त्वा ततः अदृश्यः अभवत्।

हनूमान् गुहायाम् अग्रे गतवान्। तत्र उन्नतायां वेदिकायां गोलाकारिका रत्नपेटिका आसीत्। ताम् आवृत्य उग्राः ज्वालाः ज्वलन्ति स्म। यदा हनूमान् पेटिकायाः समीपं गतवान्



निक्षिप्ताः तां पेटिकाम् अहम् आनीतवान् अस्मि। प्राणरक्षणार्थम् एषः अन्तिमः अवकाशः। रामलक्ष्मणौ यदि भवान् क्षमां प्रार्थयेत् तर्हि सजीवं तिष्ठेत्" इति।

स्वस्य पञ्चप्राणैः युक्तां रत्नपेटिकां दृष्टवतः महिरावणस्य मुखं विच्छायं जातम्। वज्रायुधेन आहतः इव सः महत् दुःखम् अनुभूतवान्। एतेन एव दुःखेन सः उक्तवान्– "अये वानर! तस्यां पेटिकायां मम प्राणाः स्युः नाम। किन्तु पेटिका उद्घाटिता चेत् भवतः रामलक्ष्मणयोः चापि प्राणाः अपि निर्गमिष्यन्ति इति तु स्मरतु। यदा पेटिका उद्घाट्यते तदा भ्रमराः ततः बहिः आगत्य भवन्तं रामलक्ष्मणौ च दष्ट्वा भवतां शरीरे कालकूटविषं पूरयन्ति। तेन विषेण भवन्तः दग्धाः भविष्यन्ति। अतः भवता न केवलं मम प्राणाः आनीताः, अपि तु स्वस्य रामलक्ष्मणयोः च मरणकारणम् अपि आनीतम्। अतः यदि प्राणाः प्रियाः स्युः तर्हि पेटिकाम् अधः स्थापयतु" इति।

"मरणात् कथमपि आत्मानं रक्षितुं मयि भीतिं जनयितुम् इच्छति वा भवान्? भोः, स्मरतु– भवतः वचनात् न काऽपि भीतिः मम" इति उक्तवान् हनूमान्।

"अविवेकेन पेटिका उद्घाटिता चेत् भवतः रामलक्ष्मणयोः च मरणम् अवश्यं भविष्यति। तेन रावणस्य मम च प्रियम् एव भवता कृतं भवति" इति पुनः उक्तवान् महिरावणः।

एतत् श्रुत्वा हनूमान् उच्चैः हसन् उक्तवान्– "आत्मरक्षणोपायं वयं जानीमः एव। वञ्चनया रामलक्ष्मणौ अत्र भवान् यत् आनीतवान् तस्य फलरूपेण मरणम् अवश्यं प्राप्तव्यं भवता। मरणात् पूर्वम् अन्यत् किमपि तन्त्रं प्रदर्शनीयम् अस्ति चेत् तदपि प्रदर्शयतु" इति।

हनूमतः निर्भयतां दृष्ट्वा क्रुद्धः महिरावणः उच्चस्वरेण– "अये कण्टकिनि! कण्टकिनि! चन्द्रसेनाम् एतत्क्षणे एव मारयतु" इति आज्ञापितवान्।

तदा हनूमान् मन्दहासपूर्वकम् उक्तवान्– "अये मायाविन्! भवतः बुद्धेः अपेक्षया

कण्टकिन्याः बुद्धिः तीक्ष्णा। सा किञ्चित्कालात् पूर्वम् एव चन्द्रसेनां मारयितुम् उद्युक्ता आसीत्। किन्तु दौर्भाग्यवशात् स्वयम् एव प्राणैः वियुक्ता अभवत्'' इति।

किं प्रवर्तते इति न ज्ञातवान् महिरावणः। सः उच्चैः चीत्कारं कुर्वन् उन्मत्तः इव व्यवहरन् समीपे यत् लब्धं तेन रामलक्ष्मणौ उद्दिश्य क्षिप्तवान्। आत्मनः शरीरे स्वयं व्रणम् उत्पाद्य रक्तबिन्दून् भूमौ पातितवान् अपि। ततः शतशः महिरावणाः जन्म प्राप्य रामलक्ष्मणौ आक्रान्तवन्तः। एतत्सर्वं दृष्ट्वा हनूमान् शिवं ध्यायन् पञ्च मुखानि प्राप्तवान्।




पञ्चभिः अपि मुखैः हनूमान् उच्चैः हुङ्कृतवान्। यदा सः रत्नपेटिकायाः आवरणम् अपनीतवान् तदा घोरः शब्दः श्रुतः। महिरावणस्य प्राणभूताः ते पञ्च भ्रमराः प्रलयकालीनं झेङ्कारं कुर्वन्तः पेटिकातः निर्गत्य हनूमन्तं दंष्टुम् अग्रे आगतवन्तः। हनूमान् पञ्चभिः अपि मुखैः युगपत् उच्छ्वसन् वायुं भ्रमरान् चापि अन्तः स्वीकृतवान्। एवं भ्रमरेषु एकैकः हनूमतः एकैकस्मिन् मुखे युगपत् अपतत्। हनूमान् निर्दयं चर्वणेन तान् भ्रमरान् युगपत् मारितवान्। मृतानां तेषां शरीरभागं भूमौ पातितवान् च। अनन्तरक्षणे एव सर्वे मायामहिरावणाः भूमौ पतिताः, मृताः अभवन् अपि।

एवं मायामहिरावणाः समग्रा सेना च नष्टा चेदपि महिरावणः रणरङ्गात् न प्रतिनिवृत्तः। सः रामलक्ष्मणौ उद्दिश्य विविधान् बाणान् प्रयुक्तवान्। तदा रामः एकं दिव्यास्त्रं प्रयुज्य महिरावणस्य शिरः कर्तितवान्। महिरावणस्य शरीरं भूमौ अपतत्। एवं महिरावणस्य संहारः जातः।

पञ्चमुखहनूमतः रामलक्ष्मणयोः च उपरि पुष्पवृष्टिः जाता। ब्रह्मादिदेवाः शिवः च तत्र प्रत्यक्षाः अभवन्। ब्रह्मा रामम् उक्तवान्— ''एषः महिरावणः कालनेमेः अंशात् उत्पन्नः आसीत्। हनूमतः साहाय्येन भवान् तं मारितवान्। हनूमान् शिवस्य अंशात्

उत्पन्नः अस्ति। अतः महिरावणस्य संहारार्थम् आवश्यिकां, सप्तसमुद्रेभ्यः अनन्तरं स्थितां, रत्नपेटिकां आनेतुं समर्थः अभवत्'' इति।

शिवः हनूमन्तम् आशीर्वादेन अनुगृह्णन् उक्तवान्– ''आञ्जनेय! भवतः शक्ति-साहसादयः अपूर्वाः। असाध्यम् अपि कार्यं साधितवान् अस्ति भवान्। अन्यथा महिरावणस्य संहारः एव न अभविष्यत्। इतः परं यः पञ्चमुखस्य भवतः स्वरूपं स्मरिष्यति सः भूत-प्रेत-पिशाचादिपीडातः मुक्तः भविष्यति'' इति।

अनन्तरं हनूमान् पञ्चमुखस्वरूपम् उपसंहृत्य ब्रह्माणं परमेश्वरं च नमस्कृतवान्। 'रामलक्ष्मणयोः सदा जयः भवतु' इति आशीर्वादेन अनुगृह्य ब्रह्मशिवादयः देवाः ततः अन्तर्हिताः अभवन्। गमनतः पूर्वं ब्रह्मा रामम् आदिष्टवान् यत् पातालल‌ङ्काराज्यस्य राजा मत्स्यवल्लभः भवतु इति। एतदनुगुणं रामः मत्स्यवल्लभम् आहूय सिंहासने उपवेशितवान्।

चन्द्रसेनायै यत् वचनं दत्तं तत् स्मरन् हनूमान् श्रीरामं विनयेन निवेदितवान्– ''प्रभो, यदि चन्द्रसेनायाः साहाय्यं न अभविष्यत् तर्हि महिरावणस्य प्राणाः कुत्र स्युः इति ज्ञातुम् अहं सर्वथा न अशक्ष्यम्। 'महिरावणस्य संहारस्य अनन्तरं प्रभुं रामचन्द्रं भवत्याः समीपम् अवश्यम् आनेष्यामि' इति चन्द्रसेनायै पूर्वम् एव वचनं दत्तवान् आसम्। अतः चन्द्रसेनायाः समीपं भवता गन्तव्यम् इति सविनयं निवेद्यते मया'' इति।

एतत् श्रुत्वा अङ्गीकारपूर्वकं शिरः चालयन् श्रीरामः उक्तवान्– ''अस्तु तर्हि, गच्छाम तावत्'' इति।

एतत् श्रुत्वा हनूमान् नितरां सन्तुष्टः। सः मार्गं प्रदर्शयन् चन्द्रसेनायाः प्रकोष्ठदिशि गतवान्। श्रीरामः मन्दहासपूर्वकं हनूमन्तम् अनुसृतवान्।





# सहजः गुणः

नागानन्दपुरे गोपालः नाम कश्चन सज्जनः निवसति स्म। परोपकारशीलता तस्य स्वभावः। बाल्यतः एव सः परोपकारशीलः आसीत्। यथा यथा सः प्रवृद्धः तथा तथा तदीया परोपकारप्रवृत्तिः अपि प्रवृद्धा।

गोपालः तु एकाकी। साहाय्येच्छवः तु सर्वे। अतः एकस्मिन् एव समये द्वित्राः यदा साहाय्यं प्रार्थयन्ति तदा गोपालः कस्यचित् एकस्य साहाय्यं करोति स्म। तेन साहाय्यम् अप्राप्तवतां कोपः वर्धते स्म। ते गोपालं वदन्ति स्म– "अये, भवति विश्वस्य अन्यस्य साहाय्यं न प्रार्थितम्। समये साहाय्यम् अकुर्वन् भवान् वञ्चितवान्। पक्षपातबुद्धिः भवतः" इति।

ये गोपालतः धनसाहाय्यं प्राप्नुवन्ति ते अपि अतृप्ताः आसन्। ते गोपालस्य अनुपस्थितौ परस्परं वदन्ति स्म– "गोपालः तु धनिकः। स्वस्य निमित्तम् अधिकं धनं न व्ययीकरोति। किं मरणसमये केनापि धनं नीयते? न खलु? यः धनम् इच्छति तस्मै अधिकं धनं दत्तं चेत् का हानिः? अल्पम् एव ददाति कृपणः सः" इति।

एतत् अपवादवचनं बहुधा श्रुत्वा गोपालः नितरां खिन्नः। स्वस्य खेदं पत्नीं निवेद्य उक्तवान् सः– "ये मत्तः साहाय्यं प्राप्नुवन्ति ते अतृप्ताः सन्ति। ये च साहाय्यं प्राप्तुं न शक्ताः ते क्रुद्धाः सन्ति। मम साहाय्यस्य आवश्यकता येषां नास्ति ते तु माम् असूयया पश्यन्ति। एतादृशस्थितौ परोपकारकरणे मम उत्साहः सर्वथा नष्टः। अतः इतः परं कस्यापि साहाय्यम् अकुर्वन् गृहे एव तूष्णीं तिष्ठामि" इति।

एतत् श्रुत्वा गोपालस्य पत्नी हसन्ती



मनःशान्तिं न प्राप्नुयाम्'' इति।

''भगवति श्रद्धा नास्ति इत्यतः एव एषा मनसः अशान्तिः भवतः। फलाफलम् अविचिन्त्य भगवति श्रद्धां प्रदर्शयतु। तेन निश्चयेन मनःशान्तिः प्राप्यते भवता'' इति उक्तवती पत्नी।

''जनसेवा एव जनार्दनसेवा इत्यत्र मम विश्वासः। शिलाप्रतिमासु देवः अस्ति इत्यत्र सर्वथा विश्वासः नास्ति मम'' इति पत्नीम् उक्तवान् सः।

''एवं तर्हि महात्मसु वा विश्वासः स्यात् खलु भवतः। श्रीनिवासपुरे कश्चन महात्मा अस्ति इति श्रूयते। जनाः तम् अवतारपुरुषं वदन्ति। तस्य नाम आत्मानन्दः इति। तस्य माहात्म्यम् एतावत् अस्ति यत् निरीश्वरवादिषु अपि सः ईश्वरभक्तिं जनयति। भवतः पितृव्यस्य पुत्रः श्रीधरः निरीश्वरवादी आसीत् खलु? सः इदानीं दैवभक्तः जातः अस्ति इति श्रूयते। अतः तं महात्मानम् आत्मानन्दं वा पश्याव, येन भवता मनःशान्तिः प्राप्येत'' इति उक्तवती पत्नी।

एतत् श्रुतवतः गोपालस्य मनसि विचारः उत्पन्नः– 'श्रीधरः तु स्वभावेन क्रूरः आसीत्। वञ्चनया भ्रातृणां सम्पत्तिं स्वायत्तीकृतवान् आसीत्। उत्कोचादिना राजोद्योगिनां प्रीतिं सम्पाद्य प्रमोदपुरस्य ग्रामप्रमुखत्वम् अपि प्राप्तवान् आसीत्। दया,

उक्तवती– ''आर्य! यः प्राणान् रक्षति तमपि दशति वृश्चिकः। सः तस्य सहजः गुणः। यः पाषाणान् क्षिपति तस्मै अपि फलं ददाति आम्रवृक्षः। एषः आम्रस्य गुणः। सहजं गुणं परित्यज्य कोऽपि सुखेन स्थातुं न अर्हति। अतः परोपकारं त्यजामि इति भवतः चिन्तनम् अनुचितम्। परोपकारम् अकुर्वन् जीवितुं न अर्हति भवान्। सद्यः तु भवतः मनःशान्तिः आवश्यकी। अतः तीर्थयात्रार्थं गच्छाव। क्षेत्रदर्शनात् देवदर्शनात् च मनसः शान्तिः प्राप्यते'' इति।

किन्तु एतत् अनङ्गीकुर्वन् उक्तवान् गोपालः– ''सज्जनत्वे विश्वासः मम, न तु देवादिषु। अतः तीर्थयात्रया अपि अहं

श्रद्धा, भक्तिः इत्यादयः गुणाः तस्मिन् सर्वथा न आसन्। एतादृशे इदानीं दैवभक्तिः दृश्यते इति वचनं सत्यम् एव चेत् तत् तु महते आश्चर्याय' इति।

एवं चिन्तयित्वा गोपालः पत्नीम् उक्तवान्– "आवां प्रमोदपुरं गत्वा श्रीधरस्य गृहे कानिचन दिनानि निवसाव। श्रीधरे परिवर्तनं जातम् इति दृढीकृतं चेत् ततः श्रीनिवासपुरम् अपि गत्वा आत्मानन्दं पश्याव" इति।



पत्नी एतत् अङ्गीकृतवती। अनन्तरदिने गोपालः तत्पत्नी च प्रमोदपुरं गतवन्तौ। यदा तौ श्रीधरस्य गृहं प्राप्तवन्तौ तदा तत्र महता वैभवेन पूजा प्रचलन्ती आसीत्। बहवः भक्ताः तत्र भजनादिकं कुर्वन्तः आसन्।

पूजायाः अनन्तरं यदा सर्वे गताः तदा श्रीधरः गोपालं प्रीत्या आलिङ्ग्य– "भवान् मयि यथा प्रीतिं प्रदर्शयति तथा मम ग्रामे कोऽपि मयि प्रीतिं न प्रदर्शयति। सर्वे मां निन्दन्तः द्वेषं प्रदर्शयन्ति। अहं जीवने उन्नतिं न प्राप्स्यामि इति वदन्ति ते। किन्तु ते यत्किमपि वदन्तु नाम, अहं तु महात्मनः आत्मानन्दस्य कृपया वैभवेन एव जीवन् अस्मि" इति उक्तवान्।

तदा गोपालः उक्तवान्– "भवद्ग्रामीणाः अप्रियानि वचनानि उक्तवन्तः स्युः। किन्तु ते भवतः हितं मनसि निधाय एव तथा उक्तवन्तः। वस्तुतः तु ते सर्वे भवतः हितचिन्तकाः एव" इति।

"हितचिन्तकाः! ये मम शत्रोः पक्षम् आश्रित्य मद्विरुद्धं वदन्ति ते मम हितचिन्तकाः कथं स्युः? मम ग्रामस्य महाबलस्य व्यवहारम् एव पश्यतु। सः मम अनुजस्य पक्षम् आश्रित्य मम निन्दनं कृतवान्। अतः अहम् अपि प्रतीकारं कृतवान्। तस्य पुत्रेण राजास्थाने उद्योगः प्राप्तप्रायः आसीत्। सः मद्ग्रामीणः एव इत्यतः तद्विषये राजोद्योगिनः मम अभिप्रायं पृष्टवन्तः। तस्य पित्रा कृतं मम निन्दनं स्मरन् अहं, राजास्थाने सः उद्योगं यथा न प्राप्नुयात् तथा कृतवान्" इति सगर्वम् उक्तवान् श्रीधरः।



अन्यच्च सः माम् उक्तवान् आसीत् यत् भवतः पुत्र्याः विवाहस्य अपेक्षया मम पुत्र्याः विवाहः एव शीघ्रं भविष्यति इति। एतत् मम हृदयं दहति स्म। सद्यः एव बरपक्षीयाः शङ्करस्य पुत्रीं स्नुषात्वेन नेतुम् इच्छन्तः मां पृष्टवन्तः यत् कन्या कीदृशी, कन्यापिता शङ्करः कीदृशः इति। अहं शङ्करविषये दुर्वचनानि उक्त्वा स च विवाहः यथा न सम्भवेत् तथा कृतवान्। किन्तु महात्मनः आत्मानन्दस्य कृपया ह्यः मम पुत्र्याः विवाहः निश्चितः। अतः एव अहम् अद्य पूजां कृतवान्" इति उक्तवान् श्रीधरः।

श्रीधरस्य वचनतः चकितः खिन्नः च गोपालः उक्तवान्– "मित्र! क्षुल्लकस्य कारणस्य निमित्तं, दोषम् अकृतवत्याः कन्यायाः विवाहे विघ्नकरणं किम् उचितम्? अनुचितं कृतं भवता" इति।

"किम् अनौचित्यम् अत्र? सर्वं दैवनिर्णयानुगुणम् एव प्रवर्तते। शङ्करस्य पुत्र्याः विवाहः विलम्बेन भवेत् इति प्रायः दैवनिर्णयः आसीत्। अतः एव विघ्नः आगतः। सर्वं शङ्करस्य दौर्भाग्यस्य फलम्" इति उक्तवान् श्रीधरः।

"केवलं स्वार्थसाधनम् एव चिन्तयन् भवान्, न जाने, कथं भगवद्भक्तः जातः इति। भवान् कथम् आत्मानन्दस्य शिष्यः जातः इत्यपि मम आश्चर्यम्" इति उक्तवान् गोपालः।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् गोपालः उक्तवान्– "इदानीं भवान् भगवद्भक्तः जातः अस्ति। अतः अहं चिन्तितवान् आसं यत् भवान् राग-द्वेषादिकं परित्यक्तवान् स्यात् इति। प्राचीनम् अल्पं द्वेषं मनसि निधाय एवं प्रतीकारसाधनं किम् उचितम्?" इति।

"रागद्वेषादिकं कथं वा परित्यक्तुं शक्येत? किम् अहं सर्वसङ्गपरित्यागी संन्यासी? न खलु? अतः ये मम अप्रियं कुर्वन्ति तेषां विषये अहम् अवश्यं द्वेषं प्रदर्शयामि। मम ग्रामीणः शङ्करः केभ्यश्चित् दिनेभ्यः पूर्वं मम गृहम् आगत्य स्वपुत्र्याः सौन्दर्यं गुणातिशयं च प्रशंसितवान्। एतत् परोक्षतया मम पुत्र्याः निन्दनम् एव खलु?

"सत्यम्। अहं सदापि मम मत्परिवारस्य च सुखम् इच्छामि। तच्च सुखं भगवद्भक्त्या सिध्यति इति बोधितं महात्मना आत्मानन्दस्वामिना। एतत् सत्यम् इति मम मनसि अभासत। अतः अहं आत्मानन्दस्वामिनः शिष्यः जातः" इति उक्तवान् श्रीधरः।

एतादृशस्य श्रीधरस्य गृहे वासः नाम कण्टकानाम् उपरि स्थितिः इव इति चिन्तयति गोपालः। किन्तु श्रीधरं खेदयितुम् अनिच्छन् सः पुनः एकं दिनं तत्र स्थितवान्। यावत् गोपालः तत्र आसीत् तावत् श्रीधरः आत्मना यद्यत् प्रतीकारकार्यं करणीयम् इति निश्चितं तत्सर्वम् उक्तवान्।

प्रवृत्तं सर्वं दृष्ट्वा गोपालस्य पत्नी निश्चितवती यत् इतः गृहं प्रति एव गम्यते इति। किन्तु गोपालः पत्नीम् उक्तवान् यत् श्रीनिवासपुरं गत्वा आत्मानन्दस्य दर्शनं प्राप्य गृहं गच्छाम इति।

तदा आश्चर्यम् अनुभवन्ती पत्नी पृष्टवती– "आर्य! श्रीधरे भगवद्भक्तिः उत्पन्ना स्यात् नाम। किन्तु तस्य स्वार्थबुद्धिः अहङ्कारः च यथापूर्वम् एव अस्ति। अकारणं द्वेषं कुर्वन् सः अन्येषां हानिम् अपि करोति। एतत्सर्वं दृष्टवत्याः मम एव भगवति श्रद्धा लुप्तप्राया। एवं स्थिते कथं भवान् आत्मानन्दं द्रष्टुं निश्चितवान्?" इति।

तदा गोपालः उक्तवान्– "श्रीधरे स्वार्थभावना अहङ्कारः च यथापूर्वम् अनुवर्तते इति तु सत्यम् एव। किन्तु श्रीधरस्य दुर्गुणान् जानन् अपि आत्मानन्दः श्रीधरं शिष्यत्वेन अङ्गीकृतवान्। एतावता तस्मिन् भगवद्भक्तिं जागरयितुं समर्थः जातः अपि। लोकः यं दुष्टः इति निन्दति तस्मिन् अपि परिवर्तनम् आनेतुं प्रयतमानः सः आत्मानन्दः महात्मा स्यात् एव। अतः तं द्रष्टुम् अहं गच्छन् अस्मि" इति।

"गुणग्राहिणा मम पत्या युक्तम् एव उक्तम्" इति आलोच्य पत्नी ससन्तोषं पतिम् अनुसरन्ती श्रीनिवासपुरं गतवती।





# रसवार्ताः

## 'फूद्गनिर्मितं ताज्मन्दिरम्'

एषु दिनेषु देहलीनगरे 'फूद्गानां मेला' प्रवृत्ता। तत्सन्दर्भे स्पर्धायां भागं वोढं न केवलं भारतीयाः, अपि तु जर्मनी, इंग्लेण्ड्, इत्यादिभ्यः विविधदेशेभ्यः समागताः दशः गणाः अपि भागम् ऊढवन्तः आसन्। स्पर्धादिने प्रातः तुषारपातः आसीत् इत्यतः निश्चिते समये स्पर्धा न आरब्धा। किन्तु तदभ्यन्तरे आकाशे अकस्मात् फूद्गनिर्मितं ताज्मन्दिरं दृष्टिगोचरं जातम्। कश्चित् उत्साही स्पर्धार्थी एतत् मन्दिरम् आकाशं प्रेषितवान् आसीत्। एतत् दृष्ट्वा तत्र उपस्थितः उपराष्ट्रपतिः श्री के.आर्. नारायणः आश्चर्यम् अनुभवन् उक्तवान्– "पूर्वम् अस्माकं ताज्मन्दिरं दृष्ट्वा कश्चित् आंग्लशासकः नितरां प्रभावितः सन् इच्छां प्रकटितवान् आसीत् यत् एतत् भवनं स्वदेशं नेतव्यम् इति। यदि सः आकाशस्थम् एतत् फूद्गताज्मन्दिर दृष्टवान् स्यात् तर्हि एतत् स्वदेशं नयन् स्वकीयां पूर्वतनीम् इच्छाम् एतेन प्रकारेण सफलाम् अकरिष्यत्" इति।

## स्फोटकस्फोटनार्थं यन्त्रम्

दीपावलीसमये स्फोटकानि स्फोटयितुं प्रायः सर्वे बालकाः उत्सहन्ते एव। किन्तु केचन बालाः इच्छावन्तः सन्तः अपि भीत्या अग्रे न प्रवर्तन्ते। किन्तु तादृशं दिनं प्रायः दूरे नास्ति, यद्दिने भीतियुक्ताः बालाः अपि सोत्साहं प्रवृत्ताः भवेयुः।

तमिळनाडुराज्ये ईरोडनगरस्थः के. आनन्दन्नामकः कश्चन चित्रकलाध्यापकः किञ्चन यन्त्रं निर्मितवान् अस्ति। एतत् गृहीत्वा यदा पिञ्जस्य नोदनं क्रियते तदा एतस्य अन्तः विद्युत् प्रवहति। ततः यन्त्रस्थे स्फोटके अग्निः युक्तः भवति। अनन्तरं स्फोटकं २० द्वादशाङ्गुलदूरे पतितं सत् सशब्दं स्फुटितं भवति। स्फोटकग्रहणार्थं दीर्घा सन्दंशिका भवति इत्यतः हस्तः दग्धः भवेत् इति भीतिः अत्र कदापि न भवति।





# भरताम्बा

कस्मिंश्चित् अरण्ये पूर्वं कश्चन भरद्वाजपक्षी आसीत्। बाल्यतः एव सः परोपकारशीलः आसीत्। भूलोके यदा तस्य आयुः समाप्तं तदा तेन सम्पादितस्य पुण्यस्य फलतः देवदूताः विमानं स्वीकृत्य तं देवलोकं नेतुम् आगतवन्तः।

देवलोके सर्वे देवाः भरद्वारपक्षिणम् महता आदरेण दृष्टवन्तः। ते उक्तवन्तः यत् अपेक्षितं वरं प्रार्थयतु इति। किं प्रार्थनीयम् इति न ज्ञातं भरद्वाजपक्षिणा। 'वरं पुनः कदाचित् याचिष्यामि' इति अवदत् सः।

भरद्वाजपक्षी कानिचन दिनानि स्वर्गे सुखेन अवसत्। कदाचित् सः देवानां समीपम् आगत्य अवदत्– "अत्र मया करणीयं किमपि नास्ति। अतः अहं पुनरपि भूलोकं गन्तुम् इच्छामि। कृपया अनुज्ञा दातव्या" इति।

देवाः एतत् अङ्गीकृतवन्तः। ते आशीर्वादपूर्वकम् उक्तवन्तः यत्, यत् रूपं भवान् इच्छति तेन रूपेण, यत्र भवान् गन्तुम् इच्छति तत्र यदा कदापि गन्तुम् आगन्तुं च शक्नोति इति। भरद्वाजपक्षी नारीरूपं प्राप्य भूलोकम् आगच्छत्। इदानीं तस्य नाम भरताम्बा इति। पूर्वं यत्र वासः क्रियते स्म तत्रैव गृहं निर्माय भरताम्बा वासं कृतवती।

भरताम्बया कदाचित् नगरं स्मृतम्। "नगरे विविधानि सौलभ्यानि भवन्ति। मनोविनोदस्य प्राप्त्यर्थं विविधाः मार्गाः भवन्ति। जनानां वेषभूषणादयः परिष्कृताः भवन्ति। व्यवहाराः अपि सुसंस्कृताः भवन्ति। वसत्यर्थं सुन्दराणि भवनानि भवन्ति। अत्र अरण्ये वार्तालापार्थम् अपि अन्यः कोऽपि न प्राप्यते। कर्तुं विशेषकार्याणि अपि न भवन्ति। अतः यदि अहं नगरे वासं

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



कुर्यां तर्हि सुखेन सन्तोषेण च जीवेयम्। नगरे यदि वासं कुर्यां तर्हि 'नागरिका भरताम्बा' इति ख्यातिः प्राप्यते'' इति आलोचितवती भरताम्बा।

एवं निश्चित्य कदाचित् भरताम्बा प्रातः उपाहारं समाप्य उत्तमानि वस्त्राणि स्वीकृतवती। द्वारं पिधाय तालेन कीलितवती अपि। कुञ्चिकां वातायने स्थापितवती सा। यावत् सा पञ्चषाणि पदानि स्थापितवती तावता अनतिदूरात् ध्वनिः श्रुतः– ''भरताम्ब! भरताम्ब!'' इति।

भरताम्बा परिवृत्य दृष्टवती। तत्र तया कश्चन हरिणशावकः दृष्टः। स च हरिणशावकः भीत्या कम्पमानः आसीत्। पुनः पुनः परिवृत्य पश्यन् आसीत् अपि सः। तदा भरताम्बा तं पृष्टवती– ''वत्स! किमर्थम् एवं भीतः अस्ति भवान्?'' इति।

''अम्ब! केचन व्याधाः मृगयार्थम् अरण्यम् आगताः सन्ति। धनुर्बाणादिसहिताः ते यं पशुं पश्यन्ति तं मारयन्तः सन्ति। अहं कथमपि तेषां दृष्टिपथात् आत्मानं रक्षन् अत्र आगतवान्। भवती मह्यं गृहे आश्रयं दातुं शक्नुयात् वा?'' इति दैन्येन अपृच्छत्।

''अये, कुतो न? अवश्यम् आश्रयः दीयते मया'' इति उक्त्वा प्रत्यागता भरताम्बा वातायने स्थापितां कुञ्चिकां स्वीकृत्य द्वारम् उद्घाटितवती।

हरिणशावकम् अन्तः प्रवेश्य अवदत् सा– ''वत्स! गृहस्य पृष्ठभागे हरिततृणानि, फलानि, कोमलानि किसलयानि च प्रभूतानि सन्ति। तानि सन्तोषेण खादन् सुखेन जीवतु भवान्'' इति।

एतावत् उक्त्वा बहिः आगत्य द्वारं कीलयित्वा कुञ्चिकां वातायने स्थापितवती सा। ततः नगरं प्रति गन्तुम् उद्युक्ता अभवत् च।

भरताम्बा यदा द्वित्राणि पदानि स्थापितवती तदा पृष्ठभागतः वेदनामिश्रितः कश्चन ध्वनिः श्रुतः– ''भरताम्ब! भरताम्ब!'' इति।

अन्यः कश्चन अपायग्रस्तः जातः अस्ति इति भाति इति चिन्तयित्वा भरताम्बा

परिवृत्य अपश्यत्। कश्चन कारण्डवः धावन् तस्याः समीपम् आगतः।

"किं मित्र! एवं धावन् आगच्छन् अस्ति खलु? कः विशेषः?" इति पृष्टवती भरताम्बा।

"अम्ब! अहं परिवारजनैः सह स्नानार्थम् एतं प्रदेशम् आगतवान्। स्नानेन सन्तुष्टः अहं परिवारजनैः सूचितः सन् अपि कासारात् बहिः न आगतवान्। तेन कुपिताः ते मां परित्यज्य गतवन्तः। इदानीम् अहं प्रतिगमनार्थं मार्गं न जानामि" इति अश्रूणि स्रावयन् अवदत् कारण्डवः।

तदा तं सान्त्वयन्ती उक्तवती भरताम्बा— "अये वत्स! किमर्थं चिन्ता भवतः? मम गृहस्य पृष्ठतः कासारः अस्ति। तत्र सुखेन तिष्ठतु भवान्। हरिणशावकः भवता सह भविष्यति। नगरात् प्रत्यागत्य अहं भवन्तं भवत्परिवारजनसमीपं नेष्यामि" इति।

अनन्तरं भरताम्बा द्वारम् उद्घाट्य कारण्डवम् अन्तः प्रेषितवती। पुनः द्वारं कीलयित्वा कुञ्चिकां वातायने स्थापितवती। ततः पुनरपि नगरं गन्तुम् उद्युक्ता अभवत्।

एतावता एव विलम्बः जातः आसीत्। अतः भरताम्बा वेगेन पदानि स्थापितवती। तावता पृष्ठभागतः पुनः दुःखमिश्रितः स्वरः श्रुतः। भरताम्बा परिवृत्य दृष्टवती। तत्र म्लानमुखः कश्चन चिक्रोडः स्थितः आसीत्। भरताम्बा प्रीत्या चिक्रोडं पृष्टवती— "चिक्रोड, चिक्रोड! किमर्थं भवान् अत्र आगतवान्?" इति।



तदा चिक्रोडः – "वृष्टिकालस्य निमित्तं मया महता श्रमेण धान्यानि सङ्गृहीतानि आसन्, वृक्षकोटरे स्थापितानि आसन् अपि। किन्तु केनापि दुष्टेन तेषां चौर्यं कृतम्। इदानीं गृहे एकम् अपि धान्यं नास्ति। मम समग्रः श्रमः व्यर्थः जातः। इदानीं किं करणीयं मया? अग्रे जीवनं कथम्?" इति वदन् अश्रूणि स्रावितवान्।

चिक्रोडस्य सान्त्वनं कुर्वती भरताम्बा उक्तवती– "मित्र! धान्यानां विषये खलु भवतः चिन्ता? तर्हि अलं चिन्तया। मम गृहे धान्यानि प्रभूतं सन्ति। मम गृहे तिष्ठन् प्रतिदिनं भवान् आतृप्ति धान्यानि खादतु। यावत् इच्छति तावत् भवान् अत्र निश्चिन्तं स्थातुम् अर्हति। यावत् अहं नगरात् न प्रत्यागमिष्यामि तावत् भवता सह हरिणशावकः कारण्डवः च भवतः" इति। अनन्तरं सा कुञ्चिकां स्वीकृत्य द्वारम् उद्घाटितवती, चिक्रोडं धान्यप्रकोष्ठे स्थापितवती च।

'इतः परं मया नगरं गन्तव्यम्' इति निश्चित्य सा द्वारपिधानं कर्तुम् उद्युक्ता अभवत्। तावता 'अद्य विलम्बः जातः। अतः नगरं प्रति गमनं मास्तु' इति विचारः तस्याः मनसि आगतः। अतः सा कीलनं परित्यज्य द्वारम् उद्घाट्य अन्तः गतवती। उत्तमानि वस्त्राणि आभरणानि च अपनीय सामान्यवस्त्राणि धृत्वा सुखासने उपविष्टवती च।

एवम् उपविष्टायाः तस्याः मनसि एवं विचारः आगतः– 'यत्र अहं वसामि तत्र बहवः पशुपक्षिणः कष्टम् अनुभवन्तः सन्ति। एवं स्थिते यदि अहं नगरं गच्छेयं तर्हि ते पशुपक्षिणः सहायहीनाः भविष्यन्ति। ते यदि विपद्ग्रस्ताः भवेयुः तर्हि अहं कथं वा सुखेन स्थातुं शक्नुयाम्? अतः अहं नगरं न गमिष्यामि। अत्रैव चिरं स्थास्यामि' इति।

नगरगमनविचारः भरताम्बायाः मनस्तः सर्वथा अपगतः। सा प्राणिनां साहाय्यं कुर्वती तत्रैव वासं कृतवती।



# प्रकृतिवैचित्र्याणि–



## सर्पस्य गिलनक्रमः

सर्पाः सजीवान् जन्तून् खादन्ति प्रायः। जन्तुं गृहीत्वा दंशनपूर्वकं विषं योजयित्वा, ग्रहणम् अतिदृढं कृत्वा वा मारयन्ति ते। ततः जन्तोः शिरोभागं प्रथमं स्वमुखे निक्षिप्य क्रमशः समग्रं शरीरं गिलन्ति। अजगरः तु स्वस्य उदरे स्थितस्य जीविनः अस्थीनि चूर्णीकर्तुं वृक्षप्रकाण्डं वृक्षशाखां वा वलयाकारेण आवृत्य तिष्ठति। तदा उदरस्थस्य जीविनः अस्थीनि चूर्णीभवन्ति।

## पर्णानां स्वरूपं समानम्

वर्णपतङ्गस्य पक्षौ यथा समानस्वरूपौ भवतः तथैव पर्णानां वामदक्षिणभागौ अपि समानौ भवतः। पर्णं विदार्य तदीयम् एकं भागम् अपरस्य उपरि स्थापयामः चेत् तयोः समानस्वरूपं ज्ञातुं शक्नुमः। एवम् एव एकस्य वृक्षस्य सर्वाणि पर्णानि अपि समानानि भवन्ति। किन्तु एतस्य अपवादरूपेण उत्तरामेरिकादेशे 'सस्साफ्रास्'नामकः वृक्षः दृश्यते यस्य च एकस्याम् एव शाखायां त्रिविधानि पर्णानि दृश्यन्ते।





## वेगेन जलान्तर्गामिनीम् अतिशेते!

अण्टार्कटिकाप्रदेशे दृश्यमानाः पेंग्विन्पक्षिणः उड्डयनसमर्थाः न। किन्तु ते जले जलान्तर्गामिनीं नौकाम् अपि वेगेन अतिशेरते। 'एम्परर्पेंग्विन्'जातीयाः तु ८५० द्वादशाङ्गुलगभीरताम् अपि गन्तुम् अर्हन्ति। तथैव २० निमेषान् यावत् जले एव स्थातुम् अपि अर्हन्ति ते।

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां मे-९३ मासे प्रकटयिष्यामः।



M. Natarajan



M. Natarajan

* उपरितन चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'जनवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **शरीरम् आरूढवताम् अपि पालकात् न हि अपायः।**

द्वितीयचित्रम् - **जलान्तर्गतानाम् अपि मारकात् अहो, प्राणापायः!**

प्रेषिका - सौ. ललिताबायी. आर्. जोशी, शास्त्रीवाडा, धारवाड-५८०००१, कर्णाटकम्।




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# चन्दमामायै राष्ट्रियपुरस्कारः

भवतां प्रियपत्रिकया चन्दमामया नूतनवर्षारम्भे अपूर्वम् उपायनं प्राप्तम् अस्ति। तच्च २५००/- रूप्यकात्मकः प्रशस्तिपत्रात्मकः च राष्ट्रियः पुरस्कारः। एषः पुरस्कारः गतडिसेम्बर्मासस्य २७ दिनाङ्के महाराष्ट्रियया इचलकुरन्जीनगरस्थया एफ्.ऐ.ई. फौण्डेषन् नामिकया संस्थया महति समारम्भे चन्दमामायै दत्तः।

प्रशस्तिपत्रे एवम् उक्तम् अस्ति—

"मासिकी पत्रिका *चन्दमामा* एषा सर्वेषां बालानां, तेषां मातापितॄणां च अनुरागपात्रम् अस्ति, तेषां गृहस्य जीवनस्य च अङ्गं जातम् अस्ति। स्वरूपे आन्दोलनात्मकता, विषये उदात्तता, प्रतिपादने अर्थपूर्णता च यस्याः अस्ति, तादृशी एषा चन्दमामा दिवं गतेन श्रीमता चक्रपाणिवर्येण समारब्धा। १९४७ तमे वर्षे वर्तमानसञ्चालकसम्पादकेन श्रीमता बि. नागिरेड्डीवर्येण एतस्य निर्वहणभारः सेवाव्रतबुद्ध्या अङ्गीकृतः। इदानीं *चन्दमामा* द्वादशभिः भाषाभिः, ब्रेल्लिप्या चापि प्रकाश्यमाना अस्ति।

चन्दमामा बालानां महिलानां च शिक्षणार्थं वैविध्यपूर्णां सेवां करोति। धारावाहिन्यः, पौराणिक्यः, अन्यविधाः च कथाः अत्र प्रकाश्यन्ते। जानपदकथाः, महाकाव्यकथाः, आत्मचरित्राणि चापि अत्र प्रकाश्यन्ते। एषा विश्वसिति यत् विविधप्रदेशवासिनां, विविधभाषाभाषिणाम् अपि बालानाम् आकांक्षा तु समाना एव भवति इति। एषा पत्रिका एवम् अपि विश्वसिति यत् सत्यपि वैविध्ये तरुणानां चिन्तनभावनयोः एकता आनेतुं शक्या इति, तद्द्वारा राष्ट्रियैकता अवश्यं साधयितुं शक्या इति च।"

'गतेषु ४५ वर्षेषु अस्माभिः एतावत् साधितम्' इति वयं यत् साभिमानं वक्तुं शक्नुयाम तदेव एफ्.ऐ.ई. संस्थया अपि उक्तम् अस्ति। तदर्थं वयं तस्यै संस्थायै शब्दातीतां कृतज्ञतां समर्पयामः। एफ्.ऐ.ई. संस्था गतेभ्यः २० वर्षेभ्यः विज्ञानं, तन्त्रज्ञानं, वाणिज्यं, कला, संस्कृतिः, कृषिः, क्रीडा इत्यादिषु क्षेत्रेषु अभिनन्दनयोग्यं कार्यं कुर्वती अस्ति। एषा संस्था विशिष्टानां संस्थानां व्यक्तीनां च चयनं कृत्वा तत्तत्क्षेत्रे ताभिः कृतं महत् कार्यं प्रसिद्धीकृत्य राष्ट्रियैकताक्षेत्रे ताभिः कृतं सहकारं च प्रकाशयति। एवं श्लाघ्यं प्रयत्नं कुर्वती अस्ति एषा संस्था।

अयि भोः अस्मदभिमानिनः! सुखदुःखानुयायिनः! हितैषिणः! भवद्भिः सह एतं सन्तोषं संविभज्य अनुभवितुम् इच्छामः वयम्।

**बि. विश्वनाथरेड्डी**
*चन्दमामाप्रकाशनप्रतिनिधिः*

